# रुक्त-समुच्चयः

## चार्य-वररुचि-प्रणीतः



सम्पादकः—युधिष्ठिर मीमांसक

ओ३म्



# निरुक्त - समुच्चयः

## आचार्य-वररुचि-प्रणीतः

सम्पादकः—

युधिष्ठिर मीमांसक



प्रकाशक

संचालक—भारतीय-प्राच्यविद्या-प्रतिष्ठान

३१/१४४ अलवर गेट, अजमेर

मुद्रकः—

श्री पं० बालकृष्ण शास्त्री

ज्योतिष प्रकाश प्रेस, कालभैरव मार्ग, वाराणसी

द्वितीय वार    संवत् २०२२    मूल्यम् ५-००

# भारतीय-प्राच्यविद्या-प्रतिष्ठान

## उद्देश्य

इस संस्था के उद्देश्य "भारतीय प्राचीन वाङ्मय का अन्वेषण, रक्षण और प्रसार" है।

## कार्य-क्रम

उपर्युक्त उद्देश्यों की पूर्ति के लिए प्रतिष्ठान के कार्य-क्रम को निम्न विभागों में बांटा है—

१–भारतीय प्राचीन वाङ्मय का अनुसन्धान।

२–भारतीय प्राचीन वाङ्मय के अनुसन्धान द्वारा विभिन्न विषयों पर मौलिक ग्रन्थों तथा निबन्धों का लेखन और प्रकाशन।

३–भारतीय वाङ्मय के विविध विभागों के इतिहास तथा भारत के प्राचीन इतिहास सम्बन्धी ग्रन्थों का लेखन और प्रकाशन।

४–भारतीय प्राचीन वाङ्मय का शुद्ध सम्पादन तथा प्रकाशन।

५–भारतीय प्राचीन वाङ्मय का राष्ट्रभाषा ( हिन्दी ) में प्रामाणिक अनुवाद।

६–संस्कृत वाङ्मय तथा इतिहास सम्बन्धी गवेषणात्मक त्रैमासिक "पत्रिका" का प्रकाशन।

७–उपर्युक्त कार्य-क्रम की पूर्ति के लिए "बृहत् पुस्तकालय" का निर्माण।

८–प्राचीन वाङ्मय की रक्षा और प्रसार के लिए 'साङ्गवेद-विद्यालय' का संचालन।

९–उद्देश्यों की पूर्ति करने हारे विशिष्ट साहित्य के प्रचार के लिए 'विक्रय-विभाग' का संचालन।

विशेष विवरण के लिए "प्रतिष्ठान की योजना, कार्य-क्रम तथा कृतकार्य-विवरण" पुस्तिका विना मूल्य मंगवाइये।

**संचालक—भारतीय-प्राच्यविद्या-प्रतिष्ठान**

२१/१४४ अलवरगेट
अजमेर

४९४३ रेगरपुरा, गली ४०
करोलबाग, नई दिल्ली ५।



# सम्पादकीय-निवेदनम् ।

( प्रथम-संस्करणस्थम् )

अयि सुरभारतीसुधारसास्वादनतत्परा महानुभावाः ! भवतां पुरस्तान्निरुक्तसमुच्चयनामा ग्रन्थो मुद्रापयित्वा समुपस्थाप्यते ।

अस्मिन् ग्रन्थ आचार्यवररुचिना नैरुक्तप्रक्रियामवलम्ब्य यमखब्रह्म-(१०२) परिमिता मन्त्रा व्याख्यायन्ते । अयं ग्रन्थः स्कन्दस्वामिकृतनिरुक्त-टीकतो बहुत्र शब्दशः संवदति । तद् दृष्ट्वैतदनुमातुं शक्यते यदयं वररुचिर्वा प्राक्तनः स्यात् स्कन्दस्वामी वा । यद्यप्युभयोः पौर्वापर्यनिश्चयाय नास्ति किञ्चिद् दृढतरं प्रमाणम्, तथाप्येकत्र निरुक्तटीकायामुर्वशीपद-व्याख्याने—"अत्र च नित्यपक्षे केचिद् उर्वशी विद्युद्, वायुः पुरुरवा इति मन्यन्ते । सा च उरु अन्तरिक्षमश्नुते प्रभया" इति [ निरु० टी० भा० ३ पृ० ३४३ ] स्कन्दस्वामिग्रन्थदर्शनादनुमातुं शक्यते यदयमत्र 'केचिद्' इतिपदेन वररुचिमेव स्मरतीति । एवं हि तद्ग्रन्थ—"नैरुक्तपक्षे तु—पुरुरवा मध्यमस्थानो वाय्वादीनामेकतमः, पुरु रौतीति पुरुरवा । उर्वशी विद्युत्, उरु विस्तीर्णमन्तरिक्षमश्नुते दीव्यत इत्युर्वशी" इति [निरु०समु० पृ० ७१][1] ।

स्कन्दस्वामिनश्च कालो विक्रमस्य सप्तमशताब्द्याश्चरमो भाग इत्यैतिह्यविदः प्रतिजानते [ द्र०—वैदिक वाङ्मय का इति० भा० १ खं० २ पृ० १—२४ ] । अतस्तस्मादयं पौर्वकालिक इत्येव वक्तुं शक्यते ।

निरुक्तसमुच्चयकृदाचार्यवररुचिर्नैरुक्तप्रक्रियानुसारं वेदेष्वैतिह्यं न मनुते । तथा ह्युक्तम्—"औपचारिकोऽयं मन्त्रेष्वाख्यानसमयो नित्यत्वविरोधात् । परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः" इति [ निरु० समु० पृ० ७१ ] ।[2]

---

१. अस्मिन् संस्करणे ८५ तमे पृष्ठे वर्तते । सं० ।

इतोऽग्रेऽस्मिन् संस्करणे ७५ तमे पृष्ठे द्वितीयस्यां टिप्पण्यां निदर्शितः संकेतोऽप्य-त्रानुशीलनीयः । यत्र स्कन्दस्वामिना निरुक्तटीकायां वररुचेः पाठः 'केचित्' पदेनोद्धृतः; 'एके'पदेन च निर्दिष्टः पाठः 'अपरे' पदेन निदर्शितः । एतेनापि वररुचिः स्कन्दस्वामिनः पूर्वभावी इति विज्ञायते ।

२. अस्मिन् संस्करणे ८६ तमे पृष्ठे वर्तते । सं० ।

इममेव सिद्धान्तं स्कन्दस्वाम्यप्यातिष्ठते। तथा हि—"एवमाख्यानस्वरूपाणां मन्त्राणां यजमाने नित्येषु च पदार्थेषु योजना कर्त्तव्या। एष शास्त्रे सिद्धान्तः। तथा च वक्ष्यति–'तत् को वृत्रः? मेघ इति नैरुक्ताः' [निरु० २।१६] इत्यादि। 'मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः' [ निरु० १२।१२ ]। 'रात्रिरादित्यस्योदयेऽन्तर्धीयते' इति [ निरु० १२।११ ]। औपचारिको मन्त्रेष्वाख्यानसमयः परमार्थेन तु नित्यपक्ष इति सिद्धम्" इति [ निरु० टी० भा० २ पृ० ७८ ]।

एवमत्र वेदेष्वितिहासविषये वेदार्थप्रक्रियायां दैवते पदपाठादिषु चास्ति बहु वक्तव्यम्। तत्सर्वं यथावसरं शीघ्रमेव सविस्तरमालोचनापुरःसरं च पृथग् भूमिकायां प्रकाशयिष्यते।

यद्यपि यादृगस्य ग्रन्थस्य गौरवमस्ति न तादृक् शोभनं मुद्रणमभूत्, तथाप्यप्रकाशनात् प्रकाशनं वरमिति मत्वा यथा कथंचिन्मुद्रणं व्यधायि।

ग्रन्थोऽयमस्माभिः श्रीमतां माननीयानां तत्रभवतां पण्डितभगवद्दत्तमहोदयानामनुग्रहेण प्रापि। ग्रन्थस्य हस्तलेखोऽयमत्यन्तमेवाशुद्धिपरिपूर्णः स्थाने स्थाने त्रुटितश्चास्ति। तस्य बहुयत्नेन संशोधने कृतेऽप्यद्यावधिसन्दिह्यमाना बहवः पाठास्तथैव मुद्रापिताः। एवं कृतेऽपि मुद्रणस्यात्यन्तं त्वरया विधानात् मम धर्मपत्न्याश्चास्वस्थताकारणान्मुद्रणे बहुत्राशुद्धयः संजाताः। तदर्थं कृताञ्जलिरहं क्षमां याचे।

ग्रन्थस्य प्रकाशनं 'डाक्टर' इत्युपाधिधारिणां पञ्चनदविश्वविद्यालये संस्कृतविभागाध्यक्षाणां श्रीमतां विद्वद्वर्याणां लक्ष्मणस्वरूपमहोदयानां प्रेरणयैवाभूदिति कृत्वा तेभ्य एवाऽयं सादरं समर्प्यते[1]। इत्यलम्॥

विदुषां वशंवदः—
**युधिष्ठिरो मीमांसकः**
विरजानन्दाश्रम, बारहदरी रोड,
पो० शाहदरा मिल्स—( लाहौर )।

---

१. अयं ग्रन्थः 'डाक्टर' इत्युपाधिधारिणां पञ्चनदविश्वविद्यालये संस्कृतविभागाध्यक्षाणां तत्रभवतां लक्ष्मणस्वरूपमहोदयानां सम्पादकत्वे प्रकाश्यमाणायाम् 'ओरियण्टलमेगजीन' त्रैमासिकपत्रिकायां सम्भवतः १९३९ तमे वत्सरे प्राकाश्यं गतः। यु० मी०।



# द्वितीयावृत्तेर्भूमिका

यदा मयाऽयं ग्रन्थो लवपुरस्थपञ्चनदविश्वविद्यालयस्य 'ओरियण्टलमेगजीन' नाम्न्यां त्रैमासिकपत्रिकायां मुद्रापितः, तस्मिन्नेव वत्सरे कीर्त्तिमात्रशेषैस्तत्र भवद्भिः 'डाक्टर' कुञ्जन्‌राजमहोदयैरपि प्राकाश्यं नीतः। अस्य शतपरिमिताः प्रतयो ग्रन्थरूपेणापि मया पृथङ्मुद्रापिताः। कतिपयवर्षानन्तरं निरुक्तसमुच्चयस्य एते द्वे अपि संस्करणे दुर्लभतां गते। अस्य पुनः प्रकाशनस्य चिरकालान्मदीयेच्छाऽऽसीत् पुनरपि द्रव्याभावात् शीघ्रं प्रकाशयितुं समर्थो नाभूवम्।

यद्यप्येतत्संस्करणं प्रथमसंस्करणमेवोपजीवति, तथापि पाठादिसंशोधने टिप्पण्यादिपरिवर्धने च कश्चिन्नूतनोऽपीह प्रयासो विहितः। तेन संस्करणमिदं पूर्वापेक्षयाऽधिकं शुद्धं परिष्कृतं चाजनि।

## वररुचेः कालः

यद्यपि प्रथमसंस्करण एतावदेव विज्ञापितमासीद् यदयं निरुक्तसमुच्चयकारः स्कन्दस्वामितः प्राक्कालिकः। परन्तु यथा-यथा नूतनं शोधकार्यं प्रवर्तते तथेदं निश्चितमेव यदयं वररुचिः संवत्प्रवर्त्तकस्य विक्रमादित्यस्य समकालिकः। स्कन्दस्वामिनः शिष्येण हरिस्वामिना शतपथब्राह्मणस्य प्रथमकाण्डस्य व्याख्यान्ते ग्रन्थनिर्माणकाल एवं निदर्शितः—

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम्॥
यदाब्दानां कलेर्जग्मुः सप्तत्रिंशच्छतानि वै।
चत्वारिंशत् समाश्चान्ये तदा भाष्यमिदं कृतम्॥

अत्र 'सप्तत्रिंशच्छतानि' इत्यत्र विप्रवदन्ते ऐतिहासिकाः। प्रायेण सर्वे पाश्चात्यमतानुयायिनो विद्वांसः 'सप्तत्रिंशच्छतानीत्येकं पदं मत्वा ३७४० तमे, कलिवत्सरे अर्थात् ६९५ वैक्रमाब्दे भाष्यं रचितमित्याहुः। परन्तु 'पण्डित सदाशिवलक्ष्मीधर कात्रे' नाम्ना विदुषा सप्तेति पदमसमस्तं स्वीकृत्य ३००७+४०= ३०४७ कलिवत्सरेऽर्थात् वैक्रमाब्दप्रवर्त्तनाद् वर्षद्वयपूर्वं हरिस्वामिना भाष्यमिदं विरचितम् इति मतमुपन्यस्तम्। ३७४० कलिवत्सरे (६९५ वैक्रमाब्दे) अवन्त्यां विक्रमनामा कश्चिदपि राजा नासीदिति सर्वसम्मतम्। तथा सति कात्रेमहोदयस्य व्याख्यानमेव युक्ततरमिति वयं पश्यामः।

इदानीमेवैकः शिलालेख उज्जयनीतः समुपलब्धः । येन हरिस्वामिनो वत्सर-प्रवर्तकस्य विक्रमादित्यस्य च समकालिकत्वं स्पष्टं प्रमाणीभवति ।[१]

## वररुचेरन्यः समुच्चयनामा ग्रन्थः

विक्रमसभ्येन वररुचिना बहवो ग्रन्था निबद्धाः । तत्रैको बालीद्वीपतः समुपलब्धः सारसमुच्चय-नामा ग्रन्थो विद्वद्वर्येण रघुवीराचार्येण द्वित्रवर्षपूर्वं प्रकाशितः । अस्मिन् ग्रन्थे महाभारतस्थानाम् अत्यन्तमुपयोगिनां वचनानां संग्रहो विद्यते । समुच्चयनामानौ द्वावपि ग्रन्थावेकस्यैवाचार्यस्य इत्यत्र न कश्चिदपि विवादावसरः । मन्ये, स्कन्दस्वामिमहेश्वराभ्यां विरचिताया निरुक्तटीकायाः पूर्ववृत्तिसमुच्चयः नाम्न्यपि समुच्चयपदनिर्देशे विशेषेण केनचित् कारणेन भवितव्यम् । वररुचिमहेश्वरयोः समकालिकत्वे सति गुरुशिष्यभावः संभावयितुं शक्यते ।

## वैदिकस्वरविषये स्खलनम्

वैदिकस्वरविषये आचार्यवररुचेर्बहुत्र स्खलनमुपलभ्यते । तथाहि—

१—तत्त्वा यामीति मन्त्रव्याख्याने तत् त्वा इति द्वयोः पदयोः तनधातोः क्त्वाप्रत्यये व्याख्याने क्रियमाणे प्रत्ययस्वरेण यदन्तोदात्तत्वं प्रसज्यते तस्य वररुचिना सर्वथैवोपेक्षा कृता । अत्र विषयेऽस्मिन्नेव संस्करणे चत्वारिंशत्तमे पृष्ठे चतुर्थी टिप्पणी द्रष्टव्या ।

इममेव स्वरदोषमभिज्ञाय स्कन्दस्वामिना निरुक्तटीकायां ( २।१ भाग २, पृ० ११ ) तत्त्वा यामि इत्येतं लौकिकमुदाहरणमित्युक्तम् ।

२—तच्चक्षुर्देवहितम् इति मन्त्रव्याख्याने पूर्वपदप्रकृतिस्वरस्य देवहितं-पदस्य देवानां दानादिगुणयुक्तानामग्न्यादीनां हितम् इति व्याख्यानं कृतम् ( द्र० पृष्ठ ३८ ) । षष्ठीसमासे तु समासस्य ( ६।१।२२३ ) इति लक्षणेनान्तोदात्तेन भाव्यम् । तस्मादुपरितनं देवैर्वा निहितम् इति व्याख्यानमेव युक्ततरम् ।

३—एता अश्वा इत्यस्य व्याख्याने प्राति सत्वनम् इत्युदात्तवतोर्द्वयोः पदयोः प्रतिसत्वनस्य भावः प्रातिसत्वनम् इत्येवं व्याख्यानमुपलभ्यते ( द्र० पृ० ९३ ) । एवं व्याख्याने प्रातिसत्वनमेकं पदं स्यात् न च द्विरुदात्तत्वस्य कथमपि सम्भवः ।

---

१. द्रष्टव्यम्—'हिन्दुस्तान' साप्ताहिक देहली, १८ अगस्त ६४, विजयादशमी अंक में डा० एकान्तविहारी का लेख ।

# वैदिकप्रक्रियायां स्खलनम्

आचार्यवररुचेर्न केवलं स्वरविषय एव स्खलनमुपलभ्यते; अपितु वैदिक प्रक्रियायामपि यत्र तत्र स्खलनं दृष्टिपथमायाति। तथाहि—

(१) शन्नो देवीति मन्त्रव्याख्याने वररुचिराह—देवीः प्रथमाबहुवचनस्य स्थाने द्वितीयाबहुवचनमेतत् (पृष्ठ ४७)।

एतच्च चिन्त्यम्। अत्र प्रथमा बहुवचन एव वाच्छन्दसि (अ० ६।१।१०७) सूत्रेण पूर्वसवर्णत्वे सिद्धे किं विभक्तिव्यत्ययेन प्रयोजनम्?

(२) सुमङ्गलीरियं वधूरिति मन्त्रव्याख्याने वररुचिना—सुमङ्गलीः छान्दसत्वाद् हल्ङ्यादिलोपाभाव इत्युक्तम् (पृष्ठ २७)।

एतदपि चिन्त्यमेव। यतो ह्यत्र न केवलमामक (अ० ४।१।३०) इत्यादिना ङीष्, अपितु 'छन्दसीवनिपौ' (अ० ५।२।१०९) इति वार्तिकेन मत्वर्थे 'ई' प्रत्ययः। यत्र तु केवलमामक इत्यादिना ङीष् भवति, भवति तत्र सोर्लोपः। यथा सा नो अस्तु सुमङ्गली (अथ० २।१९।२) इति।

(३) सुमङ्गलीरियं वधूरित्यस्मिन्नेव मन्त्रव्याख्याने 'दत्वाय क्त्वो यक्' इति यक् प्रत्ययश्छान्दस इत्युक्तम् (पृष्ठ २७)

इदमप्यसाध्वेव। नहि यक् प्रत्ययः, अपितु क्त्वो यगागमः।

एवं सत्यपि क्वचिन्मानुषसुलभप्रमादेऽप्ययं निरुक्तसमुच्चयनामा ग्रन्थोऽत्यन्तं महत्त्वयुक्त उपयोगी च वर्तते। दुर्गस्कन्दस्वामिवररुचिविरचितैर्ग्रन्थैरयं सिद्धान्तोऽत्यन्तमेव स्पष्टी भवति यन्नैरुक्ताचार्या वेदेषु अनित्येतिहासं न मन्यन्ते। नैतावदेव, अपितु नैरुक्तैरुदाहृता इतिहासा अपि नानित्येतिहासा अपितु इतिहासाभासाः। इमे चेतिहासाभासा नैरुक्तैर्मन्त्रार्थाभिव्यक्तय एव निर्दिश्यन्ते। तदुक्तं यास्केन—

(१) तत्रोपमार्थेन युद्धवर्णा भवन्ति। निरुक्त २।१६॥

इन्द्रवृत्रयुद्धवर्णा इति शेषः, न तु वास्तविकरूपेण युद्धवर्णाः।

(२) ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता। निरुक्त १०।१०,४६।

(३) यमयम्योरितिहासनिदर्शिकामृचं व्याख्यायमान आह—

यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश। रात्रिरादित्यस्य, आदित्योदयेऽन्तर्धीयते। निरुक्त १२।११॥

अत्र इतिहासोपसंहारे 'विवस्वतो जाया या यमस्य माता सा रात्रिर्वर्तत' इत्युक्तम्, तस्याः सरण्वा विवस्वतः प्रद्रवणं च आदित्योदये रात्र्या विनाशोऽभिप्रेत इति विस्पष्टं भवति ।

एतादृश एव इतिहासो नैरुक्तैर्नित्येतिहासपदेन व्यवह्रियते । नायमितिहासोऽपितु इतिहासभाषया निबद्धा प्राकृती घटना या सर्वदाऽस्मिन् ब्रह्माण्डे सम्पद्यते ।

नैषा निरुक्तनिर्दिष्टानामेवेतिहासानां गतिः, अपितु सर्वस्मिन्नपि वैदिके वाङ्मये मन्त्रार्थाभिव्यक्तये यो य इतिहासः क्वचिन्निर्दिष्टः स सर्वोऽपि नित्येतिहास एव न तु वास्तविको लौकिक इतिहासः ।

अत एवेन्द्रवृत्रयुद्धमधिकृत्य परमब्रह्मिष्ठेन याज्ञवल्क्येनोक्तम्—तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्यायते त्वदुद्यते इतिहासे त्वत् । शत० ११।१।६।९ ॥ इतोऽग्रे स्वलेखस्य प्रामाण्यनिदर्शनाय—'तस्मादेतदृषिणाऽभ्यनूक्तम्—न त्वं युयुत्से···'इत्युक्त्वा ऋङ्मन्त्रमप्युदाजहार ।

इतिहासनिबन्धनया भाषाशैल्या निर्देशादेव प्राकृता अपि प्रवाहनित्या घटना इतिहासपदेन व्यवह्रियन्ते ।

यत्तु यास्केन तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति (४।६) इत्युक्तम्, तत्रापि इतिहासवर्णनया भाषाशैल्या निबद्धो मन्त्र इतिहासपदेनाभिप्रेतः, एवम् ऋक्शब्देन पद्यमात्रनिबद्धो मन्त्रः, गाथाशब्देन स्तुतिवर्णनया भाषाशैल्या युक्तो मन्त्रः । वस्तुतस्तु वैदिकवाङ्मये मन्त्रप्रकरणे ऋक्-यजुः-साम-ब्राह्मण-इतिहास-गाथा-कल्प-नाराशंसी-इत्यादिपदैः तत्तद्विभिन्नया भाषाशैल्या निबद्धा मन्त्रा एव गृह्यन्ते, ब्राह्मणप्रकरणे च ब्राह्मणवचनानि इति वैदिकानां राद्धान्तः । इमं प्राचीनं सिद्धान्तमनवबुद्ध्यैव पाश्चात्या अस्मद्देशीयाश्च विद्वांसो बहुधाऽतथ्यं मतं कल्पयन्ति ।

## निरुक्त-श्लोक-वार्तिकस्य संप्राप्तिः

तत्र भवद्भिः पण्डितप्रवरैः 'डाक्टर' कुञ्जन्राजमहोदयैर्बहोः कालात् पूर्वं निरुक्तवार्तिकनाम्नो ग्रन्थस्यैको हस्तलेखः समुपलब्ध आसीत् । तस्योल्लेखस्तैस्तदानीमेव स्वमित्रेभ्यः पण्डितभगवद्दत्तमहोदयेभ्यः प्रहिते स्वकीये पत्रे कृतोऽभूत् । विविधकार्यव्यासङ्गात् तैर्विद्वद्भिः स्वजीवनकाले न प्राकाशि । सम्प्रत्येते महाभागा अपि यशोमात्रशेषतां गताः । निरुक्तवार्तिकस्य स हस्तलेखः कुत्र कस्य चाधिकारे वर्तत इत्यस्यापि ज्ञानं नासीत् । निरुक्तसमुच्चयस्यैतत् संस्करणमुद्रणकाल एव मम

मनसि विचारः समुदपद्यत यन्निरुक्तवार्तिकग्रन्थस्योपलब्धये कश्चित् प्रयत्नो विधेयः। दैवात् ततः किञ्चत्कालपूर्वमेव मद्रासविश्वविद्यालयस्य संस्कृतविभागस्याध्यक्षैर्विद्वद्वर्यैः श्रीपण्डित वे० राघवमहानुभावैः सह काशिकावृत्तेर्हिन्दीभाषानुवादमधिकृत्य कश्चित् पत्रव्यवहारः समजनि। पत्राचारेण तत्रभवतां राघवमहोदयानाम् उदारचेतस्त्वं विज्ञाय निरुक्तवार्तिकग्रन्थविषये एत एव महानुभावा मया पृष्टाः, यदयं ग्रन्थ इदानीं कुत्र कस्य च सविधे वर्तत इति। मम पत्रस्योत्तररूपं निरुक्तवार्तिकमधिकृत्य यत्प्रथमं पत्रं तत्र भवतां समुपलब्धम्, तदित्थम्—

यूनिवर्सिटी बिल्डिंग[1]
मद्रास-५
१५।१२।६४

श्रीमन्तो मित्रवराः

प्राप्तो भवदीयः लेखः।

कीर्तिशेषाणां श्रीकुञ्जन्राजमहाभागानां पुस्तकसंग्रहे निरुक्तवार्त्तिकस्य मातृका अथवा प्रतिलिपिरेका वर्तते। तत्र किमपि तैः प्रस्तुतं संशोधनकार्यम्, किन्तु न अनुस्यूततया कृतं वा, पूरितं वा।

अस्मिन् विषये कीदृशी भवतामपेक्षा वर्त्तते इति ज्ञात्वा उपरि कर्तुं शक्यते।

..................................................

इत्थं मित्रं
वे० राघवः

एतत्पत्रस्योपलब्ध्यनन्तरं निरुक्तवार्तिकस्य प्रतिलिपिः कथंचिदपि मया प्राप्तुं शक्यते न वा, प्रतिलिपिः प्राप्तुं शक्यते चेत् तस्याः संपूर्णो व्ययो मया प्रदास्यते इत्यभिप्राययुतमपरं पत्रं तत्र भवद्भ्यो राघवमहोदयेभ्यो लिखितः। तस्योत्तरमित्थं तैर्महाभागैः प्रदत्तम्—

यूनिवर्सिटी आफ मद्रास[1]
१६।१।६५

सुहृदः

यथानिवेदितं प्राक् तथा निरुक्तवार्तिकस्य मातृका कीर्तिशेषाणां कुञ्जन्राजानां भागिनेयस्य हस्ते वर्तते। सा काकितपत्रेषु केरललिप्यां

१. आङ्गलभाषायां रोमनलिप्यां मुद्रितम्।

वर्त्तते। यदि इष्यते, इतः देवनागरी प्रतिलिपिः अत्रत्येन लेखकेन सम्पाद्य प्रेषयितुं शक्यते।

अत्र ५००० श्लोकाः वर्तन्ते। ग्रन्थोऽयं गार्ग्यनीलकण्ठेन याजुषेण केरले कोण्डयूर् ग्रामवासिना गृहीततुरीयाश्रमेण पद्मेति संन्यासिनाम-भृता कृतः। मातृकेयं कियत् पर्यन्तं वर्तते इति अद्य परिशील्यते। द्वित्र-दिनैः विषय एव निवेदयिष्यते।

इत्थं मित्रं
वे० राघवः

एवं पत्राचारेणैवायमत्यन्तं दुर्लभो ग्रन्थो मया तत्र भवतां मित्रमणीनां वे० राघवमहोदयानां परमया कृपया प्रयत्नेन च समुपलब्धः।

## निरुक्तश्लोकवार्त्तिकस्य सामान्यपरिचयः

प्रथमपरिचयः—निरुक्तवृत्तिकारेण भगवद्दुर्गेण निरुक्तवार्त्तिकस्य चत्वारः श्लोकाः स्ववृत्तावुद्धृताः[1]। तेषु द्वौ बृहद्देवताग्रन्थेन संवदेते, अन्यौ द्वौ तत्र नोपलभ्येते। दुर्गवृत्तिसम्पादकेन काशिनाथ राजवाड़े महानुभावेन तद्ग्रन्थस्य टिप्पण्यामेकत्र लिखितम्—

अयं श्लोको बृहद्देवतायां नोपलभ्यते। बृहद्देवताकारान्नान्यो वार्त्तिक-कारः। भाग १, पृ० २२१।

एतन्मतस्य तत्रभवद्भिः पण्डितप्रवरैर्भगवद्दत्तमहोदयैः 'वैदिकवाङ्मय का इतिहास' ग्रन्थस्य 'वेदों के भाष्यकार' नाम्नि भागे (वि० सं० १९८८, सन् १९३१) सोपपत्तिकं निराकरणं व्यधायि। तत्र च मण्डनमिश्रविरचितायाः स्फोट-सिद्धेः परमेश्वरविरचितायां गोपालिकाटीकायामुद्धृतानि निरुक्तवार्त्तिकस्य षट् पद्यान्यपि समुपस्थापितानि। द्र० वैदिकवाङ्मय का इतिहास, वेदों के भाष्यकार नामक भाग, पृष्ठ २१५।

तत एव निरुक्तवार्त्तिकसम्बन्धिनिर्देशमुपलभ्य श्रीविष्णुपदभट्टाचार्य-महोदयेन १९५० तमे क्रैस्ताब्दे ( वि० सं० २००७ ) जूनमासस्य 'इण्डियन हिस्टारिकल क्वार्टर्लि' पत्रिकायां (भाग २६, संख्या २, पृष्ठ १५९-१६५) निरुक्त-वार्त्तिकविषयक एको लेखः प्रकटीकृतः।[2]

---

१. तेषु द्वौ स्कन्देनाप्युद्धृतौ। द्र० नि० टी ८।२११।१३।

२. द्र० पण्डित भगवद्दत्तकृता निरुक्तव्याख्या, भूमिका पृष्ठ ३५। अत्रैव

महोपाध्यायैस्तत्रभवद्भिः कुञ्जन्राजमहोदयैः समुपलब्धोऽयं निरुक्तवार्तिक-नामा ग्रन्थो दुर्गोद्धृतान्निरुक्तवार्त्तिकग्रन्थाद्भिन्न एव। यतस्तत्रोद्धृतानां मध्ये एकस्याप्यत्रादर्शनात्।[1]

गोपालिकाटीकायामुद्धृतानि षट्पद्यानि त्वस्यैव निरुक्तवार्त्तिकस्य सन्ति।

एवं नामसादृश्याद् उभयोर्ग्रन्थयोः श्लोकोपनिबद्धत्वाद् एतद् ग्रन्थोपलब्धेः पूर्वम् अस्माकमपि भ्रम एवासीद् यद्दुर्गवृत्तौ गोपालिकाटीकायां च निरुक्त-वार्त्तिकनाम्ना स्मृतानि पद्यानि एकस्यैव कस्यचिद् अतिप्राचीनस्य निरुक्त-वार्त्तिकग्रन्थस्य सन्ति। परन्तु प्रस्तुतग्रन्थलाभात् स भ्रमो नाशं गतः, एकनामानौ द्वौ पृथक्ग्रन्थौ स्त इति तथ्यं च प्रकटीभूतम्।

तत्र दुर्गाचार्यस्मृतो निरुक्तवार्त्तिकनामा ग्रन्थोऽत्यन्तं प्राचीनः अयं तु दुर्गस्कन्दाभ्यामौत्तरकालिकः।

## समुपलब्धस्य वार्त्तिकस्य परिचयः

अयं निरुक्तश्लोकवार्त्तिकनामा ग्रन्थो गार्ग्यकुलोत्पन्नेन कृष्णयाजुषेण केरल-मण्डलान्तवर्ति 'कोण्डयूर्' नामग्रामनिवासिना कीरशर्मणः पुत्रेण नीलकण्ठेन गृहीतचतुर्थाश्रमेण पद्येति नामभृता विरचितः। तदुक्तं स्वयमेव ग्रन्थकारेण—

गार्ग्येण नीलकण्ठेन सूनुना कीरशर्मणः।
नैघण्टुकमिदं काण्डं व्याख्यातमनुपूर्वशः॥ ४३६॥

कोण्डयूरिति विख्याते ग्रामे केरलपूजिते॥ ४३७॥

अविच्छिन्नयज्ञानां यजुर्वेदविदां कुले।
कुले महति गर्गाणां नीलकण्ठो व्यजायत॥ ४३९॥

कीरशर्मा पिता यस्य यज्वा यज्ञविशारदः।
नीलकण्ठश्चतुर्वेदे पितृव्यो यस्य धार्मिकः॥ ४४०॥

---

इदमप्यलेखि—उन्हीं दिनों मद्रास विश्वविद्यालय के महोपाध्याय डा० कुञ्जन्-राज ने मुझे पत्र लिखा था कि उन्होंने निरुक्तवार्तिक ग्रन्थ का हस्तलेख प्राप्त कर लिया है। पर वह ग्रन्थ आज तक छपा नहीं और डा० राज का परलोक गमन हो गया।'

१. समुपलब्धोऽयं निरुक्तवार्तिकग्रन्थोऽपूर्णः। दुर्गोद्धृतेषु चतुश्श्लोकेषु त्रयोऽनुपलब्धभागस्थाः। अवशिष्टः प्रथमः, सोऽत्र नोपलभ्यते।

बहुयाजी चतुर्वेदो रुद्रशर्मा पितामहः ।
भारद्वाजी च कौबेरी नीली माता बहुप्रजा ॥ ४४१ ॥

रुद्राद्या भ्रातरो यस्य दत्ताद्या जामयस्तथा ।
किञ्चित् सोऽधीत्य वेदस्य मस्करी समपद्यत ॥ ४४२ ॥

पद्म इत्यपरां संज्ञां लब्धवान् स गुरोः पुनः ।
श्रुत्वा किञ्चित् स शास्त्राणां वेदान्तेषु कृतश्रमः ॥ ४४३ ॥

अकरोत् श्रद्धया युक्तो निरुक्तश्लोकवार्त्तिकम् ॥ ४४४ ॥

ग्रन्थोऽयमतिप्रौढो वर्तते । निरुक्तस्य प्राथमिकास्त्रयोऽध्याया विस्तरेण-व्याख्याताः । तत्रापि पूर्वं पूर्वमतिविस्तरेण । उत्तरास्त्रयो नैगमकाण्डाध्यायाः पूर्वापेक्षया संक्षेपेण ।

अस्य ग्रन्थस्यैकैव मातृका समुपलब्धा सा चेदानीं तत्र भवतां कुञ्जन्‌राज-महोदयानां भागिनेयानां तत्र भवतां 'के के राजा' महाभागानां सकाशे वर्तते । इयं मातृका केरललिप्यां ताडपत्रे विद्यते । कोशस्यातिप्राचीनत्वाद् बहुत्र पाठा-स्त्रुटिताः सन्ति । द्वित्रस्थलेषु पत्राण्यपि नष्टानि । कोशोऽयं षष्ठाध्याये चतुर्थ-पादे जत्रारुपदनिर्वचन एव सन्तिष्ठते । अस्मिन् कोशे आहत्य ४६४० श्लोकाः सन्ति ।

ग्रन्थकृता एतावान् एव ग्रन्थो लिखितः पूर्णतां वा प्रापित इत्यत्र न किञ्चि-दपि प्रमाणान्तरमुपलभ्यते ।

विशेषस्तु समग्रस्य ग्रन्थस्य सम्यक् परिशीलनानन्तरमेव वक्तुं शक्यत इत्युपरमामः ।

## उपसंहारः

अहं चिरकालात् प्रायेणाऽस्वस्थोऽर्धस्वस्थो वाऽस्मि, तथापि स्वकार्यव्यसने यथाकथंचित् प्रतिष्ठानकार्यं निर्वहामि । परन्तु गतदिसम्बरमासेऽस्मच्छ्रद्धाभाजां पदवाक्यप्रमाणज्ञानां तत्र भवतां गुरुवर्याणां भारतशासनेन गीर्वाणवाणीसेवायै सम्मानितानां पण्डितब्रह्मदत्तजिज्ञासुमहोदयानामकस्मादेव स्वर्गमनमभूत् तेषां निरीक्षणे सम्पद्यमानानां श्रीरामलालकपूरनिक्षेपसंस्थायाः विविधकर्मणामति-भारोऽपि मय्येव प्राधान्येन पतितः । कथमुभयकार्यजातं सम्पादयिष्यामीति नाव-बुध्येऽहम् । अस्तु पुरुषार्थसहकारिणा भाग्यचक्रेण यद्भवितव्यं तदेव भविष्यतीति विश्वसन् उभयकार्यभारं यथाशक्ति वोढास्मि ।

निरुक्तसमुच्चयग्रन्थस्यैतत्संस्करणनिष्पादने सौभाग्यवत्या वेदवत्या व्याकरणोपाध्यायया पर्याप्तं साहाय्यं विहितम्। सौ० वेदवती विगतैकवर्षाद् अस्मिन् प्रतिष्ठान एव संशोधनकर्मणि साहाय्यं विदधती ममानुपस्थितौ प्रतिष्ठानस्यकार्यमपि यथाशक्ति संचालयति।

वाराणसीस्थज्योतिषप्रकाशमुद्रणालयाध्यक्षा श्रीमन्तो बालकृष्णशास्त्रिणः सदैव अस्मत्प्रतिष्ठानग्रन्थानां मुद्रणकर्मणि साहाय्यं विदधति। एते महानुभावाः सर्वदैव स्वकृपया मामनुगृह्णन्ति, तदर्थमेतेषामत्यन्तमनुगृहीतोऽस्मि न धन्यवादमात्रेणानृण्यं सम्भवतीति विरमामि।

भारतीय-प्राच्यविद्या-प्रतिष्ठान
३१।१४४ अलवर गेट, अजमेर

विदुषां वशंवदः—
युधिष्ठिरो मीमांसकः

## विषय-सूची

# अथ निरुक्तसमुच्चयः

## आचार्य-वररुचि-प्रणीतः

अग्निं वायुं[1] तथा सूर्यं लोकानामीश्वरानहम् ।
नमामि नित्यं देवेशान्नैरुक्तसमये स्थितः ॥

अथेदानीं मन्दप्रज्ञावबोधनार्थं मन्त्रविवरणं [ क्रियते, तच्च न ] निरुक्तमन्तरेण संभवति । यत आह—"अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते"[2] इति । "नानिरुक्तार्थवित् कश्चिन्मन्त्रं निर्वक्तुमर्हति"[3] इति च वृद्धानुशासनम् ।

निरुक्तप्रक्रियानुरोधेनैव मन्त्रा निर्वक्तव्याः । मन्त्रार्थज्ञानस्य च शास्त्रादौ[4] प्रयोजनमुक्तम्—योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञान-

---

(१) तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः । वायुर्वेन्द्रो वान्तरिक्षस्थानः । सूर्यो द्युस्थानः [ निरु० ७ । ५ ] इति नैरुक्तमतानुसारमन्तरिक्षस्थानस्थाया देवताया वैकल्पिकत्वं बोध्यते । तत्रायं निरुक्तसमुच्चयकारो वायुदेवतामातिष्ठते । अत एव चतुर्थकल्पे "इन्द्र क्रतुं न आ भर" [ ऋ० ७ । ३२ । २६ ] इति मन्त्रव्याख्याने "देवताविकल्पो वा वायुरिति नैरुक्ताः, सूर्य इति याज्ञिकाः" इत्युक्त्वा "नैरुक्तपक्षे—इन्द्र दानादिगुण ! इन्द्रो मध्यस्थानो वायुरुच्यते" इत्याह । अनयैव प्रक्रियया नैरुक्तसमये इन्द्रपक्षे वायु-मरुदादिपदघटितेषु मन्त्रेषु वाय्वादिपदानामिन्द्रपदार्थे वृत्तिर्द्रष्टव्या ॥

(२) निरु० १।१५ ॥

(३) अनुपलब्धमूलमिदम् । तुलना कार्या—"सर्वा स्त्री मध्यमस्थाना पुमान् वायुश्च सवर्गः । गणाश्च सर्वे मरुत इति वृद्धानुशासनम् ।" अयं श्लोकः स्कन्दनिरुक्तटीकायां [११।१३], निघण्टुटीकायां [ पृष्ठ ४८६ ] चोपलभ्यते । दुर्गवृत्तावपि [ ११।१३ ] क्वचित् पाठान्तरेणोपलभ्यते । निरुक्तवार्तिकस्येदं वचनं स्यादिति संभाव्यते ।

(४) नात्रादिपदस्य "यस्मात्पूर्वं नास्ति परमस्ति स आदिः" [ म० भाष्य० १।१।२१ ] इति प्रधानोऽर्थो विवक्षितः । निरुक्तशास्त्रस्य तादृश आदावदर्शनात् ॥

विधूतपाप्मा[1] इति। शास्त्रान्ते[2] च—यां यां देवतां निराह तस्यास्तस्यास्ताद्-भाव्यमनुभवति[3] इति च।

वेदपदार्थविवरणे च बाहुश्रुत्यमन्वेष्टव्यम्—बिभेत्यल्पश्रुताद् वेदो मामयं प्रचलिष्यति[4] इति व्यासवचनम्। अबहुश्रुतस्यापि कर्तृवचनात् तथार्थाभिवादादिभिः[5] (?) श्रद्दधानस्य जन्तोरपि[6] इति सरस्वतीसूक्तिगुणस्तुत्यसुरामुदं कुर्वते। अतो यथाशक्ति दिङ्मात्रं प्रदर्श्यते—

ब्रह्म॑ जज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒न आ॑वः।
स बु॒ध्न्या॑ उप॒मा अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि वः॑[7] ॥१॥

सर्वमन्त्रव्याख्याने प्रथममार्षकथनं कर्त्तव्यम्। मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते[8] इत्यत्र प्रदर्शितम्। नकुलो नाम ऋषिः। आदित्यो देवता [इति] शौनकर्षिदर्शनम्[9]। यस्य वाक्यं स ऋषिः,[10] या तेनोच्यते सा देवता[11] इति। घर्मादिष्टवनेऽस्य विनियोगः[12]। परोक्षक्रमोऽयं विनि-

(१) निरु० १।१८ ॥

(२) नात्रान्तपदेन "यां यां देवतां निराह" [ निरु० १३।१३ ] इत्यत्रैव निरुक्तशास्त्रस्य परिसमाप्तिर्भवतीति भ्रमितव्यम्। पूर्ववदत्रापि नान्तपदेन "यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः" [ म० भाष्य० १।१।२१ ] इति प्रधानोऽर्थो विवक्षितः। एतेन चतुर्दशोऽध्यायो (त्रयोदशाध्याय एवास्यान्तर्भावमिच्छन्त्येके) निरुक्तसमुच्चयकारकाले नासीदिति वक्तुं न शक्यते ॥ (३) निरुक्त १३।१३ ॥

(४) म० भा० दाक्षिणात्ये पाठे आदि० १।२९४ ॥ औत्तरपाठे आदि० १।२६८ तु "मामयं प्रहरिष्यति" इत्येवं पाठः।

(५) भ्रष्टोऽयं पाठः। (६) अनुपलब्धमूलमिदम्।

(७) यजु० १३।३ ॥ तै० सं० ४।२।८ ॥ तैत्तिरीयसंहितायां 'बुध्न्याः' इत्यस्य स्थाने 'बुध्नियाः' इति पाठः। (८) निरु० ६।२७।

(९) अत्र बृहद्देवता—[ ८।१४, १५ ] द्व्यृचस्तु मारुतः प्रतेत्यैन्द्री वा, ब्रह्म यत् परम्। तत्रानिरुक्तसूक्तादावृगेका सूर्यमर्चति ॥ (१०) ऋ० सर्वा० परिभाषा २।४ ॥

(११) ऋ० सर्वा० परिभाषा २।५ ॥

(१२) प्रवर्ग्य इति शेषः। तथाहि ऐतरेयब्राह्मणे [ १।१९ ] प्रवर्ग्यस्तुतौ विनियोगः। आश्व० श्रौत ४।६ ॥ तैत्तिरीयसंहितायान्तु "ब्रह्म जज्ञानमिति रुक्ममुपदधाति" [ ५।२।७ ] इत्यादिना चयने रुक्मनिधाने विनियोगः।

योगः। परोक्षकृतोऽयं मन्त्रः प्रथमपुरुषयोगात्[1]।

ब्रह्म नामानि सर्वाणि सामान्येनाख्यातजानि हि नैरुक्तसमयत्वात् क्रियायोगमङ्गीकृत्य प्रयोगः। तथा हि तत्र-तत्र नामान्याख्यातजानि [इति] शा [कटायनो] नैरुक्तसमयश्च[2] इति। वृह वृह वृद्धौ इति अन्येभ्योऽपि दृश्यन्ते[3]—इति मनिन्प्रत्ययान्तस्यैतद् रूपम्। सर्वतः परिवृद्धत्वाद् ब्रह्मपदेन आदित्यमण्डलमुच्यते[4]......वनस्य (?) तदाधाररूपे स्थितिरित्युपनिषत्सु गीयते—मण्डले हीदं जगत् प्रतिष्ठितम्[5] इति। जज्ञानमिति जायमानमुत्प[द्यमानम्] प्रथममिति मुख्यमुच्यतेऽन्येषां तेजसाम्। तथा च स्मरणम्—

ब्राह्मणो वै मनुष्याणामादित्य[स्तेजसां दि]वि।
शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम्॥[6]

इति। पुरस्तात् पूर्वतः। कस्य? सामर्थ्यात् जगदुत्पत्तेः। अथवा प्रत्यहमुदयास्तमङ्गीकृत्याह पुरस्तात् पूर्वस्यां दिशि, पूर्वमेव वा सर्वप्राणिनामुत्थानात्। वि इत्ययमुपसर्गः 'आवः' इत्याख्यातेन संबध्यते। कुतः एतत्? अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्[7] इत्यभियुक्तोपदेशात्। न निर्बद्धा उपसर्गा अर्थान्निराहुः[8] इति निरुक्त[9]भाष्यकारवचनाच्च। सीमतः सीमशब्दः सर्वादिषु[10] पठ्यते। विभक्तिव्यत्ययेन सप्तम्येकवचनं द्रष्टव्यम्। कुत एतत् लभ्यते? सुपां सुप आदेशा भवन्ति[11] इति वैयाकरणात्

(१) "तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य" [निरु० ७।१] इति यास्कवचनमत्रानुसंधेयम्॥ (२) निरुक्त १।१२॥ (३) अ० ३।२।७५॥
(४) तुलना—शत० ७।४।१।१४॥ (५) अनुपलब्धमूलमिदम्॥
(६) मनुस्मृतावष्टमाध्याये द्व्यशीतितमादुत्तरं प्रक्षिप्तरूपेणोपलभ्यते॥
(७) इदं न्यायभाष्ये [१।२।९] उपलभ्यते॥ (८) निरु० १।३॥
(९) निरुक्तशब्देन निघण्टुरुच्यते। घनिर्निर्णये धातुः काशकृत्स्नीये। 'निघण्टुः' निर्णायक इति तदीयकन्नडटीकायां व्याख्यायते। तदेवं निरुक्तनिघण्टुशब्दौ पर्यायभूतौ। तस्य च निघण्ट्वपरनाम्नो निरुक्तस्य 'समाम्नायः समाम्नातः' इत्यारभ्य भाष्यम्। अतएव प्राचीना नैरुक्ता इमं ग्रन्थं निरुक्तभाष्यनाम्ना व्यवहरन्ति।
(१०) सर्वादीनि सर्वनामानि [अ० १।१।२७] इत्यत्र सर्वादिगणे 'सिम' शब्द एव पठ्यते न तु 'सीम' शब्दः। पाठान्तरं वा द्रष्टव्यम्।
(११) महाभाष्ये "सुपां च सुपो भवन्तीति वक्तव्यम्" [७।१।३९] इत्येवं पाठ उपलभ्यते॥

[ नियमात् ]। यथार्थे विभक्तिः सन् [ नमयेत्[१] इति नैरुक्तात् ]। सर्वस्मिन्नित्यर्थः, सामर्थ्यात् सर्वस्मिन् जगति। अथवा सीमशब्दः सीमापर्यायः[२] अस्मिन् पक्षे आकारो मर्यादार्थं आह[३]। मुख्यमासीमतः। सर्वस्य सीमारूपेणावस्थितो लोकालोकपर्वतः[४]। आलोकालोकपर्वत[ात्] इत्यर्थः। सुरुचः रश्मयः सुरोचमानत्वात्, सुदीप्तान् रश्मीन् सहस्रसंख्यातान्[५]। वेनः, सुप्तिङुपग्रहलिङ्गनराणाम्[६] इति लिङ्गव्यत्ययः, वेनम्। वेनतिः कान्तिकर्मा[७] कान्ता। कस्य ? सर्वस्य भूतजातस्य। आवः पूर्ववरणं मर्त्त्यस्य (?) लुङि छान्दसमेतद् रूपम्, विशब्दस्यात्र सम्बन्धः। व्यवृणोत् विवृतवान् विसृष्टवान् इत्यर्थः। न केवलं रश्मिविसर्गमेवाकरोत्। किन्तर्हि स लिङ्गव्यत्यय......तत्। अथवा मण्डलमध्यस्थः पुरुषोऽभिधीयते। स आदित्यः बुध्न्याः, बुध्नमन्तरिक्ष[म्], बद्धा अस्मिन् धृता आपः[८] इति, तत्र भवा बुध्न्या दिश[९] उच्यन्ते। तथा च स्मरणम्—

> [ ताभ्यां ] स शकलाभ्यां तु दिवा भूमिं च निर्ममे।
> मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम् ॥[१०]

इति। उपमाः उप[म] इत्यन्तिकनाम,[११] परितो भूताः। अस्य आदित्यस्य सर्वस्य वा जगतः, सर्वस्य समीपोपलब्धे। विष्ठाः विष्टभ्यस्थात्रीः। अष्टावपि दिशो विवृताः करोतीत्यर्थः। सतश्च योनिं विद्यमानस्य वस्तुनः स्तम्भकुम्भादेः योनिम्। असतश्च अविद्यमानस्य योनिम्। वेतेर्निप्रत्यया-

(१) निरु० २।१॥ (२) द्र० निरु० १।७॥
(३) अत्र कदाचित् 'अध्याहार्यः' इति पाठः स्यात्।
(४) द्र०—रघुवंशः [१।६८] मल्लिनाथकृता तट्टीका च।
(५) द्र० ऋ० ६।४७।१८—युक्ता अस्य हरयश्शता दश। तै० सं० २।४।५—सविता यः सहस्रियः। जै० उप० ब्रा० १।४४।५—सहस्रं हैत आदित्यस्य रश्मयः॥
(६) महाभाष्य० ३।१।८५॥ (७) निघ० २।६॥
(८) निरु० १०।४४॥ (९) दिशो वा अस्य बुध्न्याः। शत० ७।४।१।१४॥
(१०) मनु० १।१३॥ (११) निघ० २।१६॥

न्तस्य वर्णव्यापत्त्यादिना योनिशब्दो निरुक्तः[1]। योनिमवगम्य[2] विवः विवृणोत (?) व्यवृणोत् प्रकाशितवानित्यर्थः। किमिदमुच्यते ? यावत् खलु भगवत आदित्यस्य तेजसा न व्याप्रियते भुवनमण्डलं, तावत् सदसद्भावौ न व्यासज्येते, व्यापृते तु घटोऽस्ति नवेति वक्तव्यं भवति। अतः सत्त्वमसत्त्वं च व्यञ्जितवानित्यर्थः ॥ १ ॥

नवो॑नवो भवति॒ जाय॑मा॒नोऽह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्र॑म्।
भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन् प्र च॒न्द्रमा॑स्तिरते दी॒र्घमायुः॑[3] ॥२॥

सूर्यायाः आर्षम्। चन्द्रमा[4] स्तूयते आदित्यो[5] वा। पापयक्ष्मगृहीतस्यादित्ये चरौ पुरोनुवाक्यैषा।[6]

नवोनवः नवशब्दः प्रियवचनः, वीप्सायां द्विर्वचनम्। प्रत्यहं प्रियतमः प्रतिपत्प्रभृतिष्वहःसु पूर्वपक्षानूयेषु (?, पूर्वपक्षोदयेषु)[7] जायमानः कुतः ? प्रतिदिनमेकैकस्याः कलाया वृद्धेः। अह्नां केतुः केतयति प्रज्ञार्थः, प्रज्ञापयिता कर्त्ता इत्यर्थः। स निशाकरं इति कालविद्भिरभिधीयते। उषसाम् एकस्या एव पूजार्थे बहुवचनम्[8], उषसाम् अग्रम् अत्राङ्पूर्वा-

(१) तुलना—निरु० २।८।     (२) 'अवगतिम्' इति पाठः स्यात्। अवगतिं ज्ञानमित्यर्थः।

(३) ऋ० १०।८५।१९॥ तै० सं० २।४।१४ तत्र 'अग्रे' 'तिरते' इति पाठान्तरे।

(४) चन्द्रमा······तस्यैषा भवति—नवो-नवो भवति [११।६] इत्यादि निरुक्तमत्रानुसन्धेयम्। आश्वलायने [९।८] शांख्यायने [ १४।३२।९ ] च श्रौतसूत्रे दूणाशे [दुराशः, बहुहिरण्यः, अतिमूर्त्तिः, बहुसुवर्णश्चैकस्यैव क्रतोर्नामधेयानि ] क्रतौ चान्द्रमासे चरौ विनियोगोऽस्य मन्त्रस्य।

(५) आदित्यदैवतो द्वितीयः पाद इत्येके। निरु० ११।६॥

(६) यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं······अमावस्यायां निर्वपेत्······नवोनवो भवति जायमान इति पुरोनुवाक्या भवति। तै० सं० २।३।५॥

(७) अत्र पूर्वपक्षशब्देन शुक्लपक्ष उच्यते, एवमपरपक्षशब्देन कृष्णपक्षः। पूर्वममान्ता एव मासा बभूवुः। अतएव पञ्चाङ्गेषु अमावस्यायाः ३० अङ्कसंकेतः संगच्छते। दक्षिणभारते साम्प्रातमप्यमान्ता एव मासा भवन्ति॥

(८) तुलना कार्या—स्कन्द निरुक्त टीका ११।६—उषसामिति पूजार्थे बहुवचनम्।

[ इ ] गमेरग्रशब्दो निरुक्तः[१] । अग्रमागमनमुदयं प्रति एति गच्छत्यपरपक्षान्ते । कथं ? प्रत्यहं क्षीयमाणावयवः क्रमेणापरपक्षान्ते सवितुरुषःकालसमीपवर्त्तिः निलयं यातीत्यर्थः । एवं पूर्वपक्षापरपक्षान्ते निर्वह (?) निर्वा[प]णेन भागम् भजनीयमाहारत्वेन, आज्यादि हविरुच्यते । तथा च श्रूयते—इतः प्रदानं देवा उपजीवन्ति[२] इति । तद् देवेभ्यः यागाङ्गभूतेभ्यो विदधाति करोति, आयन् आभिमुख्येन गच्छन्, चक्रवत् प्रजा भ्राम्यमाण इत्यर्थः । [ प्र ] प्रशब्दस्तिरत इत्यत्र संबध्यते । चन्द्रमाः चायन् पश्यन् भूतानि द्रवत्यन्तरिक्षे निर्माता चोदकश्चेति धातुजत्वं प्रदर्शितम्[३] । स तिरते प्रतिरते प्रकर्षेण वर्द्धयति दीर्घ[ मायुः ] शतसंवत्सरलक्ष[ण]मायुर्दृष्टादृष्टसाधनम् । कस्य ? स्तोतॄणां यष्टॄणां च ।

अथवा पूर्वापरं चरतः[४] इति पूर्वस्यामृचि सूर्यचन्द्रमसोः सह स्तुतिदर्शनादत्रापि स्तुतिसम्भवात् द्वितीयः पाद आदित्यदैवतः[५] । अत एवायमादित्ये चरौ विधीयते । अह्नां केतुः [६]दशकेतुशब्दो व्याख्यातः[७] । स च दिनकर इति ज्योतिश्चक्रविद्भिरभिधीयते । उषसाम् उषसः अग्रम् आगमनम्[८] मर्यो न योषामभ्येति पश्चात्[९] इति मन्त्रान्तरदर्शनात् ॥

---

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ३ ॥[१०]

मेधातिथेरार्षम् । द्युस्थप्रदर्शनार्थं समाम्नातस्य मण्डलमभिष्टूयते । देवताकाण्डे च प्राधान्यस्तुतिभाजः[११] । तथा ह्युक्तम्—अथातो दैवतम् ।

(१) अत्र निरुक्तम्—"अग्रमागतं भवति" इति । ६।२॥ (२) तै० सं० ३।२।९॥
(३) चन्द्रमाश्चायन् द्रवति, चन्द्रो माता । निरु० ११।५॥ स्कन्दटीकाप्यत्रानुसन्धेया । निरुक्ते 'द्रमति' इति प्रायिकः पाठः । (४) ऋ० १०।८५।१८॥
(५) तुलना—निरु० ११।६॥ (६) 'दश' इत्यनावश्यकः शब्दः ।
(७) अस्मिन्नेव मन्त्रव्याख्याने । (८) स्कन्द स्वामी 'अग्रशब्दोऽन्तवचनः । अन्तं प्रत्युपसामन्त उदेति' इत्याह । निरु० टीका ११।६॥ (९) ऋ० १।११५।२॥
(१०) ऋ० १।२२।२०॥ तै० सं० १।३।६॥ (११) पश्यन्त इति शेषः ।

तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते[1] इति। निरुक्तकाण्डत्रयं श्रूयते—नैघण्टुकम्, नैगमिकम्, दैवतमिति। तथा चाहुर्नैरुक्तिकाचार्याः[2]—

आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा।
तृतीयं दैवतं काण्डं शास्त्रमेतत् त्रिधा स्थितम् ॥[3] इति।

[ तत् ] तच्छब्देन निरुपमं तेजोनिधानं जगद्व्यापारकारणं मण्डलमुच्यते। [ विष्णोः ] विष्लृ व्याप्तावित्यस्य, विशतेर्व्यश्नोतेर्वा, तद्रूपाश्रयाणां धातूनामर्थस्य विद्यमानत्वात्। तथाहि अर्थनित्यः परीक्षेत[4] इति भाष्यकारो निरवदत्। [ विष्णोः ] विष्णुरादित्य एव नभसो व्याप्त्या दीप्त्या [ च ], न वस्त्वन्तरं निरुक्तदर्शनात्[5]। विष्णोर्भगवत आदित्य[ स्य ] परमम् उत्कृष्टम्, पदम् पद्यतेः। तथा च श्रूयते—स यश्चायं पुरुषे यश्चासावादित्ये स एकः[6]। एवं तत्रादि[ त्य ]शब्देनादित्यमण्डलमभिधीयते। अतो मन्दिरं मण्डलं सदा सर्व[ दा ] एव पश्यन्ति सूरयः पण्डिताः परिपक्वज्ञानाः। ननु च सर्वो लोकः पश्यति मण्डलं, न सूरिगण एव? सत्यमेतत्, तथापि पश्यदक्षण्वान् न विचेतदन्धः[7] इति वचनात् निगमनिरुक्तव्याकरणादिविद्यारूपेण चक्षुषा यः पश्यति, स एव पश्यतीत्युच्यते। स एव हि संसारबन्धनात् मुच्यते, नान्य इति। तथा चोक्तम्—सम्यग्दर्शनसम्पन्नः कर्मभिर्न स बध्यते[8] इति। दिवि द्युलोके इवशब्दश्चक्षुश्शब्दात् परो द्रष्टव्यः चक्षुरिव, यथा चक्षुः प्रत्यक्षगोचराणां पदार्थानां प्रकाशकम्, एवमन्तरस्थस्य सर्वस्य हिमवदादेर्वस्तुनः प्रकाश[ क ]रूपेणावस्थितम्। [ आ ] आभिमुख्येन ततम् पदार्थं प्रति, तनु विस्तारे, विस्तीर्ण-

(१) निरु० ७।१॥ (२) निरुक्तशब्द उक्थादिषु ( गणपाठ ४।२।६० ) पठ्यते, तस्माट्ठक्। नैरुक्त-शब्दस्तु औत्सर्गिकेऽणि द्रष्टव्यः, प्रदीयतां दाशरथाय मैथिली ( रामा० ६।१४।३ ) इति यथा।

(३) अनुपलब्धमूलमिदम्। सायणेनर्ग्वेदभाष्योपोद्घाते, षड्गुरुशिष्येण सर्वानुक्रमणीटीकायां च वचनमिदमुद्ध्रियते। कदाचिदिदं निरुक्तवार्तिकस्य वचनं स्यात्।

(४) निरु० २।१॥ (५) द्र० निरु० १२।१८, १९॥ (६) तै० उ० २।८॥

(७) ऋ० १।१६४।१६॥ (८) मनु० ६।७४॥

भवस्थितमित्यर्थः। तथा च श्रूयते—तस्मात् सर्व एवं मन्यन्ते मां प्रत्युदगात्[१] [इति,] पुरुषं पुरुषं प्रत्यादित्यो भवति[२] इति च। तद् वयमपि वन्दामह इत्यभिप्रायः ॥



शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः[३] ॥४॥

गोतमो विश्वान् देवान् आयुः प्रार्थयते। शतम् इति नु इत्येतौ शब्दौ निपातौ पादपूरणौ। शरदः शरच्छब्दः संवत्सरपर्यायः, संवत्सरान्, शतसंवत्सरमायुरित्यर्थः। कुतः? उत्तरत्रायुर्ग्रहणात्। अन्ति अत सातत्यगमन इत्यस्यैतद् रूपम्, सातत्येन नित्यत्वं लक्ष्यते। नित्यं जरामरणनिर्मुक्तान् कुरुध्वमिति वाक्यशेषः। कीदृशं तदायुः? उच्यते यत्रा नः, ऋचि तुनुघमक्षु[४] इति दीर्घत्वम्, यत्र यस्मिन्नायुषि नः अस्माकम्, च[क्रा] लिण्मध्यमपुरुषस्य बहुवचनमेतद्रूपं भविष्यदर्थे द्रष्टव्यम्, करिष्यथ यूयमित्यर्थः। जरसं जरा तनूनां तनुशब्दः शरीरवचनः। एतदुक्तं भवति—जीवन् भद्राणि पश्यति[५] इति लोकसंवादात्। सर्वसम्पत्साधनभूतमायुः शतसंवत्सरलक्षणमाशास्यते। उत्तरोऽर्धर्चोऽस्यैव प्रपञ्चः। अस्मासु जीवत्सु [पुत्रासः] अस्मत्पुत्रा अपि पुत्रवन्तो भविष्यन्ति इत्यर्थः। प्रार्थनीयं हि तत्। यत आह—

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥[६]

इति। तादृशमायुः। [पुत्रासः] छान्दसस्त्वसुगागमः पुत्राश्च यत्र यस्मिन्नायुषि पितरो भवन्ति भविष्यदर्थे लट्, भविष्यन्ति। मा इति प्रति-

(१) तै० सं० ६।५।४॥ (२) अनुपलब्धमूलमिदम् ॥
(३) ऋ० १।८९।९॥ (४) अष्टा० ६।३।१३३ ॥
(५) अनुपलब्धमूलमिदम्। क्वचिदेवं पठ्यते—'न मृतो जयते शत्रून् जीवन् भद्राणि पश्यति। मृतस्य भद्राणि कुतः कौरवाय जयः कुतः ॥'
(६) मनु० ९।१३७ ॥ म० भा० आदि० ७४।३८ (क्वचित्कः पाठः)।

षेधार्थो निपातो रीरिषत इत्याख्यातेन संबध्यते। नः अस्माकं मध्या मध्यशब्दात् सप्तम्येकवचनस्य सुपां सुलुक्[1] इत्याकारः। मध्येऽपर्याप्त एव पुरुषार्थे इत्यर्थः। रीरिषत रिषतिर्हिंसाकर्मा, मा रीरिषत मा वधिष्ट। तद् आयुः उक्तलक्षणं गन्तोः दृष्टादृष्टोपकारार्थं कृतार्थात् प्राप्तुमित्यर्थः॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्[2] ॥५॥

अनेन गोतमोऽदितेर्देवमातुर्भूमानमाह। अदितिर्द्यौः कार्यकारणयोरभेदोपचारेण कार्यस्य कारणव्यपदेशः। अदितिप्रभवत्वात् द्यौरदितिरुच्यते। तथा अदितिः एव अन्तरिक्षम्। अदितिर्माता निर्माता निर्मात्री वृष्टिदानेन सर्वस्य जगतः। स पिता सैव पिता पालयित्री। तेनैव कर्मणा सर्वस्य भूतजातस्य स पुत्रः सैव सर्वथा (१, द्रा) पुरु बहु त्रायते[3] इति पुत्र इत्युच्यते। किं च विश्वे देवा अदितिः देवमातृत्वाद् देवा अदितिरित्युच्यन्ते। पञ्चजनाः, चत्वारो वर्णा निषादः पञ्चमः[4] इति देवगन्धर्वादयो[5] वा, ते चादितिप्रभवत्वादेवमुच्यन्ते। किं बहुना अदितिर्जातम् अदितिः कारणमेव यत् किञ्चित् जगति जातम्। अदितिर्जनित्वम् अदितिः कारणमेव जनिष्यमाणमुत्पद्यमानमपि। सा नः पातु सदा, अदितिरिति वाक्यशेषः।

नित्यपक्षेण प्रकृतिरुच्यते[6], तद्विकारः सर्वमिति योज्यम्॥

यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्।
अग्निष्टत् स्विष्टकृद् विद्वान् सर्वं स्विष्टं सुहुतं करोतु स्वाहा[7] ॥६॥

(१) अष्टा० ७।१।३९॥ (२) ऋ० १।८९।१०॥ (३) तुलना—निरु० २।११॥
(४) निरु० ३।८॥ (५) द्र०—गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके। निरु० ३।८॥
(६) तुलना—निरुक्तस्कन्दटीका ४।२२,२३ पृ० २६३, २६४॥
(७) आप० श्रौ० ३।१२।१॥ अत्र 'स्वाहा' पदं न पठ्यते, यागे तु प्रदानार्थोऽनुषज्यते। तुलनीयम्—शत० १४।९।४।२४॥

यज्ञे कर्मणि वर्तमानानामृत्विजामवश्यं प्रस्मरणसंभवात्, प्रस्मरणमूलत्वादूनातिरिक्तस्य, तदुपपत्तौ विगुणं कर्म स्यात्। विगुणाच्च कर्मणः फलाभावः। तदुपशमनार्थमेतत् प्रायश्चित्तम्।

यदस्य यागाख्यस्य कर्मणोऽत्यरीरिचम् अतिरेकं कृतवानहं यद्वा वा शब्दः समुच्चये वायुर्वा त्वा मनुर्वा त्वा[1] इति यथा, यच्च न्यूनम् हीनमित्यर्थः। इह प्रकृते कर्मणि अकरम् कृतवानस्मि। अग्निः अङ्गतेर्गत्यर्थस्य अग्निरागमयिता गमयिता [च] भूतानां, प्राणभूतो रुद्रोऽभिधीयते। [तत्] स च स्विष्टकृदाख्यः। तथाहि श्रूयते—रुद्रोऽग्निः स्विष्टकृत्[2] इति। ततः प्रकृतमूनातिरिक्तं स्विष्टस्य कर्त्ता विद्वान् जानन् सर्वं कर्म स्विष्टं याज्यया इष्टं दुरिष्टमपि स्विष्टं करोतु इति वाक्यशेषः। सुहुतम् दर्व्यादिना दुर्हुतमपि सुहुतं करोतु। स्वाहेति प्रदानार्थो निपातः॥

---

आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व।
नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनाँश्चिज्जनिवतश्चकर्थ ॥७॥

......अवस्युर्नाम ऋषिः, तस्यार्षम्। आ आभिमुख्येन प्रद्रव प्रधावास्मान् प्रति, हे हरिवः मघवन्! मा वि[ वेनः वे-नति ]स्सामर्थ्याद् लम्बनार्थः मा विलम्बिष्ठाः। यद्वा कान्तिकर्मा, विगतकामो विगतेच्छः सामस्तु[त]श्च प्रतिमातुः। यद्वा गतिकर्मा, मा विगमः, यावद्यज्ञः समाप्यते तावत् तिष्ठेत्यर्थः। हे पिशङ्गराते पिशङ्गा रातिर्यस्येति बहुव्रीहिः, पिशङ्गवर्णस्य सुवर्णादेरित्यर्थः। अभि नः सचस्व व्यवहितसम्बन्ध...... अभिसेवस्वास्मान् कर्मान् कर्मात् (?)। कस्मादेवमभिधीयते? उच्यते—[ न हि ] हिशब्दोऽयं यस्मात् त्वत् त्वत्तः अन्यत् किञ्चिदपि हे इन्द्र वस्यः वसुमत्तरः अस्ति त्वमेवातिशयेन धनवानित्यर्थः। यतश्च अमेनांश्चित् जनिवतः जायावतः [ चकर्थ ] करोषि।

---

(१) तै० सं० १।७।७ ॥ का० सं० १३।१४ ॥ निरु० १।५ ॥
(२) अनुपलब्धमूलमिदम् ॥ (३) ऋ० ५।३१।२ ॥

धनवन्तं हि स्त्री कामयते । तथा च लोकवादः—धनमभिजनमापादयति[1] इति । तच्च धनं त्वत्प्रसादात् लभ्येतेत्यभिप्रायः ॥

---

अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात्[2] ॥८॥

वामदेवस्य । निशेष्टौ सामिधेनीषु अस्या ऋचो विनियोगः[3] । अया अनया ते षष्ठी चतुर्थी वा द्वितीयार्थे, द्वितीयैकवचनस्य वा [ते] आदेशः छान्दसत्वात् । हे अग्ने समिधा विधेम परिचराम, लोडर्थे लिङ् । प्रति इत्युपसर्गो गृभाय इत्यनेन संबध्यते । स्तोमम् इमं, सामधेनीनां शस्त्राणां च तुल्यधर्मत्वात्, [शस्यमानम्] शस्त्रधर्मेण क्रियमाणं गृभाय गृहाण, प्रतिगृह्य च दहाशसः अशंसितन् आत्मनः रक्षसः राक्षसान्, पाहि रक्ष च अस्मान्, कुतः ? द्रुहः द्रोग्धुः निदः निन्दितुश्च सकाशात् हे मित्रमह मित्राणां पूजयितः अवद्यात् गर्ह्याच्च पापात् ॥

---

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम्[4] ॥९॥

वसिष्ठस्यार्षम् । प्रातरनुवाकाश्विनयोः (?, प्रातरनुवाकेऽश्विनोः) शस्यते[5] । एना अनेन, वः छान्दसत्वात् द्वितीयैकवचनस्य वसादेशः त्वां अग्निं नमसा अन्ननामेदम्[6], हविर्लक्षणेनान्नेन निमित्तभूतेन तदुप-

(१) अनुपलब्धमूलमिदम् ॥
(२) ऋ० ४।४।१५ ॥ तै० सं० १।२।१४ ॥ (३) अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद् ......निशितायां निर्वपेद् [तै० सं० २।२।२] इत्यादिना रक्षोघ्नेष्टिः समाम्नायते । अस्यामिष्टौ कृणुष्व पाज इत्यनुवाकः कृत्स्नो विनियुक्तः तस्मिन्नृचोऽष्टादश । तासु पञ्चदश सामिधेन्यः । एका पुरोऽनुवाक्या, द्वे याज्ये विकल्पिते इति सायणः [तै० सं० भा० १।२।१४] तत्रेयं पञ्चदशी ॥ (४) ऋ० ७।१६।१ ॥
(५) आश्वलायनश्रौतसूत्रे प्रातरनुवाके शस्यते । अ० ४ खं० १३ ॥ (६) निघ० २।७ ॥

भोक्तव्यमित्येवमर्थमित्यर्थः। यद्वा स्तोत्रं तेन निमित्तभूतेन। ऊर्जो नपात् ऊर्गणं बीजलक्षणं रसो वृष्ट्यादिलक्षणः तस्य नपात् पौत्रः अग्निः। कथं ? ततो [1]ह्योषधिवनस्पतयो जायन्ते, ओषधिवनस्पतिभ्य एष जायते[2] इति। एवमग्निरूर्जः पौत्रः। त्वाम् आहुवे आहूयाम् किंलक्षणं ? प्रियम् देवानां मनुष्याणां च चेतिष्ठम् अतिशयेन चेतनावन्तं अरतिम् अक्तमतिं पर्याप्तमतिं स्वध्वरम् शोभनयज्ञं विश्वस्य सर्वस्य यजमानगणस्य य इष्टोऽधिक[तः] तस्य (?) कर्मणि तस्य दूतमममृतम् अमरधर्माणम्। एतदुक्तं भवति—तुमाशासमृद्धये आह्वये। स चाहूतो देवान् प्रति दौत्यं करिष्यतीत्यभिप्रायः॥

---

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम[3] ॥१०॥

विभवस्यार्षम्। संस्रवे[4] वैश्वदेवे शस्त्रे विनियोगः[5]। मम एकवचनं बहुवचनस्य स्थाने, अस्माकमित्यर्थः। हे अग्ने तव प्रसादाद् वर्चः "ब्राह्मं तेजो वर्चः[6]" इत्युक्तेः, तद् विहवेषु विविधमाहूयन्ते शक्रादयो देवा यस्मिन् स विहवः संसव उच्यते। तस्मिन्नस्माकमेव सोमयागजनितं ब्राह्मं तेजः अस्तु भवतु, अस्य यजमानस्येत्यभिप्रायः। किं च वयं [त्वा] त्वाम् इन्धानाः दीपयमाना समिद्भिरन्वहं तन्वं तनुं शरीरमस्मदीयं पुषेम पुष पुष्टौ पुष्येम। त्वत्प्रसादाद् बहुधनमस्माकमस्तु इत्यर्थः। [मह्यम्] बह्वर्थमेकवचनमस्मभ्यं नमन्ताम् नम प्रह्वत्वे प्रह्वीभवन्तु प्रदिशः प्रकृष्टा दिशः चतस्रः दिक्शब्देनात्र दिङ्निवासिन उच्यन्ते मञ्चाः क्रोशन्ति[7] इति यथा।

---

(१) 'ताभ्य ओ' इति निरुक्तपाठः [८।५]॥ (२) निरु० ८।५॥
(३) ऋ० १०।१२८।१॥
(४) ज्ञानविषये विद्विषाणयोः स्तुत्ययोरह्नोः सन्निपातनं संसव इत्याचक्षते इति। शां० श्रौ० १३।५।१॥ अत्र भाष्यम्—क्रियमाणकर्मज्ञानगोचरे देवयजनानन्तर्ये विद्विषाणयोर्यजमानयोः स्तुत्ययोरह्नोर्यः सन्निपातः, एककालोपनिपातः पदार्थानां तं संसव इत्याचक्षते याज्ञिकाः इति॥ शां० श्रौ० भा० १३।५।१॥
(५) विहव्यो वैश्वदेवम्। शां० श्रौ० १३।५।१७॥ (६) अनुपलब्धमूलमिदम्॥
(७) तुलना—महाभाष्य अ० ४।१।४८॥

सर्वेषामपि भूतानामीश्वरत्वमाशास्यते। किं च त्वया त्वयैव अध्यक्षेण अग्रेसरेण पृतनाः सेनाः प्रतिबन्दिभूताः जयेम। भगवतोऽग्नेः प्रसादादस्मच्छत्रवोऽप्यपहृतवर्चसो निलीनाः शेरतामित्यर्थः।

---

ऋध्याम॒ स्तोमं॑ सनु॒याम॒ वाज॒मा नो॒ मन्त्रं॑ स॒रथे॒होप॑ यातम्। यशो॒ न प॒क्वं मधु॒ गोष्व॒न्तरा भू॒तांशो॑ अ॒श्विनोः॒ काम॑मप्राः॥११॥

भूतांशो नाम कश्यपपुत्रोऽश्विनाबालः[2]। प्रत्यक्षकृतोऽयं मन्त्रः। कुत एतत् ज्ञायते? मध्यमपुरुषयोगात्। ऋध्याम ऋधु वृद्धौ ऋद्धं समृद्धं स्वरसौष्ठवादिना स्तोमम् युष्मद्गुण (?) सम्पूर्णं कुर्म्म इति शेषः। न केवलं युष्मत्स्तवमेव कुर्मः [किं तर्हि?] सनुयाम सनु दाने दद्म च वाजम् वाजमित्यन्ननाम[3] अन्नं हविः [आ] आकारस्योपयातमित्याख्यातेन सम्बन्धः नः अस्माकं मन्त्रं मत्वर्थीयोऽयं[4] प्रत्ययः, ऋगादिभिर्मन्त्रैर्मन्त्रवन्तं याज्यावन्तमित्यर्थः। सरथा प्रथमाद्विवचनस्य सुपां सुलुक्[5] इत्याकारः सरथा (थौ) समानमेकं रथमारुह्येत्यर्थः...... इह इहेति कालः प्रतिनिर्दिश्यते, एतस्मिन् काले उपयातम् आख्यातोपसर्गयोर्मध्य आकारः प्रविशति उपायातमुपगच्छतमित्यर्थः। आगतयोश्च युवयोः यशो न यश इत्यन्ननाम[6] न शब्द उपरिष्टादुपमार्थीयः[7] पुरोडाशादन्नमिव पक्वं पक्वसदृशं भोजनयोग्यमित्यर्थः। मधु मधुररसं ह (मि) ष्टतरमित्यर्थः। गोषु सप्तमीबहुवचनं षष्ठीबहुवचनस्य स्थाने गवाम् अन्तः अन्तःशब्दो मध्यपर्यायः मध्ये ऊधसि वर्तमानमित्यर्थः। किं तत्? सामर्थ्यात् पयः [आ] आकारः 'अप्राः' इत्यनेन सम्बध्यते। भूतांशः अश्विनोः चन्द्रादित्यरूपयोः कामं प्रकामं (?) अप्राः प्रा पूरणे, आभिमुख्येन पूरयति प्रवर्ग्यौ। एतत् ज्ञात्वा तूर्णमुपयातमिति संबन्धः॥

---

(१) ऋ० १०।१०६।११॥ (२) अष्टोऽत्र पाठः॥ (३) निघ० २।७॥
(४) अत्र कश्चित् पाठस्त्रुटितः। यद्वा 'मत्वर्थीयोऽच्प्रत्ययः' इति पाठः स्यात्॥
(५) अष्टा० ७।१।३९॥ (६) निघ०२।७॥ (७) तुलना—निरुक्त १।४॥

अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑।
क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒ राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥१२॥

शुनःशेपो यूपे नियुक्तो वरुणमाह—अव इत्ययमुपसर्ग ईमह इत्याख्यातेन सम्बध्यते ते तव हेळः क्रोधनामेदम्[२]। तथा ह्याहुर्ब्रह्मवादिनः—प्रत्यक्षहेतुप्रसादा राजानः[३] इत्यादि। पूर्वमयागजनितो योऽस्माकमुपरि रोषः, तं रोषं हे वरुण परित आच्छादितः वारिणा तेजसा वा सर्वस्य, नमोभिः स्तुतिभिः ईमहे इति [४]सिंहावलोकनन्यायेनाख्यातस्यापकर्षः। अवेमहे अव इत्ययमप्रेत्यस्य स्थाने द्रष्टव्यम, ईमहे याच्ञाकर्माऽन्यत्र[५], इह तु गत्यर्थः, अपगमयामेत्यर्थः। अव इत्यस्यापि पूर्ववत्संबन्धः। यज्ञेभिः यज्ञैः सप्तम्यर्थे तृतीया यज्ञेषु यागेषु अवभृथेत्यादिषु ईमहे हविर्भिः एककपालादिभिश्चापगमयाम इत्यर्थः। यत एवमतः क्षयन् क्षि निवासगत्योः निवसन् स्वस्मिन् स्थाने गतरोषस्त्वायन्नित्यर्थः अस्मभ्यम् विभक्तिदोषो मा भूत्[७] [ असुर असुः ] इति प्राणनाम द्रष्टव्यम्, मत्वर्थीयो रप्रत्ययः[८] 'मुष्करः' इति यथा, प्राणवान् महाबल प्रचेतः प्रकृष्टऽज्ञ, उक्तं च भाष्ये—"तत्प्रशस्या (१, तं प्रज्ञया ) स्तौति"[९] इति। राजन् स्वामिन् सर्वस्य भूतजातस्य एनांसि पापानि वाङ्मनःकायजातानि इह जन्मनि पूर्वजन्मनि च [ कृत्यानि ] कृतानि

(१) ऋ० १।२४।१४।

(२) निघ० २।१३॥ (३) अनुपलब्धमूलमिदम् ॥

(४) 'सिंहो गच्छन् कदाचित् पृष्ठतोऽपि पश्यति' इति सिंहावलोकनन्यायः । तुलना काशिका० ३।३।४९॥ (५) निघ० ३।१९॥

(६) वारुणमेककपालम् । शां० ब्रा० १८।९॥

(७) अत्र कश्चित् पाठस्त्रुटित इति प्रतिभाति ॥

(८) तुलना—'अपि वाऽसुरिति प्राणनाम। अस्तः शरीरे भवति । तेन तद्वन्तः' इति निरुक्तम् [ ३।८ ]॥ असुरशब्दो द्विविधः। आद्युदात्तोऽनुदात्तश्च। आद्युदात्तो हीनार्थकः। अन्तोदात्तो बलवतो वाचकः। अयमेवान्तोदात्तोऽसुरशब्दोऽवेस्ताग्रन्थे 'अहुर' रूपेण परिणतः, न तु हीनार्थकोऽसुरशब्दः। वेदे निन्दनीयोऽसुर एवावेस्तायां परमात्मवाचकोऽहुरः संजात इति यत् पाश्चात्यानां वचनं तत्प्रलापमात्रमेव, अज्ञानविजृम्भितं वा।

(९) निरु० ६।१३॥

शिश्रथः श्रथ शैथिल्ये शिथिली कुरु नाशय इत्यभिप्रायः, पापमूलत्वात् सर्वदुःखानामित्यर्थः ॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम[1] ॥१३॥

शुनःशेपस्यार्षम् । उद् इत्ययमुपसर्गः श्रथय[2] इत्यनेन संबध्यते । उत्तमम् हे वरुण पाशं रज्जुं अस्मत् अस्मत्तः सिंहावलोकनन्यायेनाख्यातमनुकृष्टव्यम्, उच्छ्रथय उन्मोचय अव अस्य च तेनैवाख्यातेन सम्बन्धः । अधमम् पाशं अवश्रथय अव इत्ययमधो भावे द्रष्टव्यः, अध एव मोचय । वि पूर्ववदेवाऽस्य सम्बन्धः मध्यमं पाशं तत्रैव श्रथाय विश्रथय । अथ अनन्तरं वयं पाशबन्धान्मुक्ताः, हे आदित्य अदितेः पुत्र व्रते व्रतमिति कर्मनाम[3] कर्मणि तव त्वत्सम्बन्धिनि वर्तमानाः अनागसः आगः पापमाह आङ्पूर्वात् गमेः किल्विषम् इति निरुक्तम्[4] । अपापाः सन्तः अदितये अदि[तिरि]ति पृथिवीनाम पृथिव्यै स्याम पृथिव्यां चिरं जीवेम इत्यभिप्रायः । एवमाख्यानसमय इयं मन्त्रस्य योजना ॥

अथवा[5] कश्चिद् यजमानः उत्तमाधममध्यमैः पाशैर्बद्धो राजानं वरुणं प्रार्थयते उत्तममुत्कृष्टं घोरं हे वरुण पाशं बन्धनहेतुभूतं पापं ब्रह्महत्यादिमहापातकरूपं [अस्मत्] अस्मत्तः उच्छ्रय अवनयेत्यर्थः । अधमम् अपि पापमभोज्यभोजनादिनिमित्तं अपनय मध्यमम् अपि पापमुपपातकादिरूपं नाशय । अथ अनन्तरं त्वया क्षालितसर्वकल्मषाः सन्तो वयं हे आदित्य दीप्तभाव व्रते कर्मणि तव त्वद्देवत्ये [ए]व वर्तमाना अनागसः

(१) ऋ० १।२४।१५॥ (२) वैदिकं दीर्घत्वं परिहाय 'श्रथय' ।
(३) निरु० २।१३॥
(४) निरुक्ते त्वेवं पाठः—आग आङ्पूर्वाद् गमेः । एन एतेः । किल्विषम् । इति [११।२४] ॥
(५) नैरुक्तपक्ष इयं योजना द्रष्टव्या ॥

आगः प्रमादः प्रमादरहिताः अदितये स्याम अक्षीयमाणाय स्याम, अक्षया (?, अक्षयम्) गमिष्याम इत्यभिप्रायः ॥

---

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः[१] ॥१४॥

वामदेवोऽग्निमाह—सेत् सांहितिकः सुलोपः सः, इ[दि]ति पदपूरणः। हे अग्ने त्वत्प्रसादाद् अस्तु भवतु सुभगः भग इति धननामधेयम्,[२] भजतेर्भर्ज्यतेर्व्यज्यतेः (?, भृज्ज्यतेः) सर्वार्थाः (?), सुशब्द पूजायाम्, शोभनेन दृष्टोपकारेण धनेन धनवान्, सुदानुः दामाभ्यां नुः[३] सुष्ठु पात्रेभ्यो दाता अस्तु, दैव्यागादीस्तु स्यात् दाता पात्र······त्र विशेषेण श्रद्धधानस्यैव च, अल्पे दत्ते बहुगुणं दानस्य वाप्यर्धर्चम्[४] इति वचनात्। कोऽसौ यस्त्वा [त्वां] नित्येन अग्निहोत्रादिना हविषा य उक्थैः यश्चोक्थैः शस्त्राण्युक्थशब्देन,[५] इह तद्वन्तोऽग्निष्टोमादय उच्यन्ते, तैः पिप्रीषति प्रीङ् तर्पणे तर्पयितुमिच्छति तर्पयति इत्यर्थः। किं च स्वे स्वकीये आयुषि शतवत्सरलक्षणे शतायुश्च भवन्नित्यर्थः, दुरोणे दुरोण इति गृहनाम,[६] स्वस्मिन् गृहे स्थाने स्थितः सन्नित्यर्थः। इदमप्याशास्यम्, यतो लौकिका आहुः—स्वे गृहे निवासः स्वर्गनिवासः[७] इति। विश्वा विश्वशब्दः सर्वपर्यायः, सर्वा [इत्] इच्छब्दः [अपिशब्द]स्यार्थे अनेकार्थत्वान्निपातानाम्, अस्मै यजमानाय सुदिना कल्याणदिना सा असत्

---

(१) ऋ० ४।४।७॥

(२) निघ० २।१०॥ (३) पं० उणा० ३।३२॥

(४) अनुपलब्धमूलमिदम् ॥ अयमत्र शुद्धः पाठः—"दात्रा पात्रविशेषेण श्रद्धधानस्य चैव हि। अल्पे दत्ते बहुगुणं दानस्यावाप्यते फलम् ॥"

(५) अत्र कश्चित् पाठस्त्रुटित इति प्रतिभाति। कदाचित् 'गृह्यन्ते' 'उच्यन्ते' वा स्यात् ॥

(६) निघ० ३।४॥ (७) अनुपलब्धमूलमिदम् ॥

पञ्चमो लकारः,[1] अस्त्वित्यर्थः, इष्टिः इषु इच्छायाम्, इच्छा पुत्रादिविषया, पुत्रादिव [तः] सकलात्वाद्, पुत्रादिवान् सकलस्त्वाम् आराधयन् मर्त्यः सर्वथा कार्त्तार्थ्यमापद्यतामित्यर्थः ।

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय[2] ॥१५॥

प्रस्कण्वस्यार्षम् । सूर्योऽभिधीयते स च द्युस्थानः । उद्यन् उदयगिरि-शिखरात् अद्य अस्मिन् काले मित्रमहः मित्राणां स्तोतृणामभिलषितार्थ-प्रदानेन पूजयितः । अथवा मित्रवदुपकारी महनीयश्च······त्वा आरोहन् आकारो बहुवचन[ार्थः] बलेन स्वेन निहत्य रक्षांसि रोहन्, तथा च श्रूयते—आदित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ति[3] इति । किमारोहन् ? उत्तराम् उत्कृष्टां पुण्यकृति[भि]स्सेव्यमानामनुपमसुखस्थानं दिवम् । [ हृद्रोगम् ] हृदयरोगं सर्वदुःखमूलं सन्तापमित्यर्थः, मम त्वत्परिचारकस्य संसक्तपरितापस्य हृदयस्य सूर्य हे सूर्य हरिमाणं च हृत्तोरं च प्रभादीनां रोगविशेषम् नाशय निर्मूलम् । प्रदर्शनार्थमिदम्, कुष्ठभगन्दरप्रमेहादी-नष्टावपि महारोगान्नाशय । किं बहुभाषितेन, भगवन् भक्तवत्सल भव-त्प्रसादात् नीरोगो भूयासम् इत्यर्थः । तथा ह्याप्तवचनम्—

आरोग्यं भास्करादिच्छेत् मुक्तिमिच्छेज्जनार्दनात् ।
ईश्वराज्ज्ञानमिच्छेच्छ्रियमिच्छेद्धुताशनात्[4] ॥ इति ॥

---

(१) द्र० 'लेट्शब्दस्तु वृत्तिकारदेशे जुगुप्सितः' इति । पदमञ्जरी, भाग २, पृष्ठ ५१९ । तथा च नरसिंहाचार्योऽप्याह—उत्तरदेशे लेड् इत्यमङ्गले भाषान्तरेण प्रयोगात् तद्देशीय-शाब्दिकादिभिर्लेट्प्रत्ययः पञ्चमलकारपदेन व्यवह्रियते इति । छलारीटीका ऋ० १।१।१७४, पृ० ७० क० ॥

(२) ऋ० १।५०।११॥ (३) तै० सं० २।६।६॥

(४) अनुपलब्धमूलमिदम् ॥ अस्य प्रथमं चरणम् 'आरोग्यं भास्करादिच्छेदिति' इत्येवं सेतिकं गौतमधर्मसूत्रे निर्दिश्यते । द्र० मैसूर सं० पृष्ठ ४६९ । अत्रैव मस्करीभाष्य एवं

अ॒ग्निं वः॑ पू॒र्व्यं गि॒रा दे॒वमी॑ळे॒ वसू॑नाम् ।
स॒प॒र्यन्तः॑ पुरुप्रि॒यं मि॒त्रं न क्षे॑त्र॒साध॑सम्[1] ॥ १६ ॥

कश्यपस्यार्षम् । अग्निं, वः छान्दसत्वादेकवचनस्य वसादेशः त्वां (पूर्व्यम्) पूर्व्यमिति पुराणनाम[2] गिरा स्तुतिलक्षणया वाचा देवम् दानादिगुणम् ईळे ईड स्तुतौ स्तौमि, वसूनाम् वस्विति धननाम[3] धनानां, षष्ठीश्रुतेरर्थाय इति शेषः । अथवा स्वस्वामिलक्षणा षष्ठी, धनानां स्वामिनमित्यर्थः । तथा ह्युक्तवचनम्—श्रियमिच्छेद्धुताशनात्[4] इति, अग्नौ वामं वसु सन्यदधत[5] इति च श्रुतिः । अथवा वसवः पार्थिवो देवगणः । तथा हि—अग्निर्वसुभिर्वासव इति समाख्यातः स्यात् पृथिवीस्थानाः[6] इति भाष्यकारवचनम्[7] । तेषां स्वामिनमित्यर्थः । सपर्यन्तः सपर्यतिः परिचरणकर्मा[8] बहुवचनमेकवचनस्य स्थाने सपर्यन् परिचरन् पुरुप्रियम् पुर्विति बहुनाम[9] बहूनां यजमानानां प्राणिनां वा सर्वेषां प्रियमिष्टं, किमिव ? मित्रं [न] क्षेत्र[साधसम्] साध संसिद्धौ यथा क्षेत्रस्य दृष्टादृष्टसाधनभूतस्य साधायितृमनुष्यः, तथाह्यहमप्यभिलषितार्थप्रदायिनमिति सम्बन्धः ॥

---

स्यो॒ना पृ॑थिवि भवानृक्ष॒रा नि॒वेश॑नी ।
यच्छा॑ नः॒ शर्म॑ स॒प्रथः॑[10] ॥ १७ ॥

मेधातिथेरार्षम् । [स्योना] स्योनमिति सुखनाम स्यतेरवसानार्थस्य,[11] ग्राम्यसुखं भुक्त्वा ह्यवस्यति विनश्यति इत्यर्थः । तथा च स्मरणम्—इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्[12] इति । सेवितव्यमिति व

---

श्लोकः पठ्यते—'आरोग्यं भास्करादिच्छेद् धनमिच्छेद्धुताशनात् । ऐश्वर्यमीश्वरादिछेन्मोक्षमिच्छेज्जनार्दनात् ॥ द्र० तदेव सं०, पृष्ठ ४६९ । अस्य चतुर्थं चरणं स्कन्दोऽप्युदाजहार (स्कन्द टीका० भा० ३ पृ० ८३ ]

(१) ऋ० ८।३१।१४ ॥ (२) निघ० ३।२७ ॥ (३) निघ० २।१० ॥
(४) द्र० पूर्व पृष्ठ १७, टि० ४ । (५) तै० सं० १।५।१ ॥
(६) निरु० १२।४१ । तत्र '...समाख्या तस्मात्पृ...' इति पाठः ॥
(७) भाष्यकार इह यास्कोऽभिप्रेतः । (८) निघ० ।५ ॥ (९) निघ० ३।१ ॥
(१०) ऋ० १।२२।१५ ॥ (११) निघ० ३।६॥ (१२) मनु० २।९३॥

सिवेर्वर्णव्यापत्यादिना स्योनं, सेवितव्यं हि तदवश्यम्। तथा च स्मरणम्—भोक्ता च धर्मा[१] व्यासवचनम्। ततः स्योना सुखरूपा सुखस्यानेकविधस्य संपादयित्री हे पृथिवि प्रथिते सक्तात्साकाशवत् भव भूयाः अनृक्षराः "ऋक्षरः कण्टक[२] [ ऋच्छतेः। कृण्टकः कन्तपो वा ]" कं सुखं सर्वप्रकारं सर्वप्रकारकं तवामि[३] नाशयामीत्युद्गतः तवतेर्वर्णव्यापत्त्या। कण्टकसदृशैर्जनैर्माभिभवनीया अयत्नभोग्या च इत्यर्थः। निवेशनी निवेशयित्री च स्वर्गादिव [तु] स्थानं बहुधनसंपादनेन, यच्छ देहि नः अस्मभ्यं शर्म शर्म शब्दः सुखपर्यायो गृहपर्यायश्चास्ति[४], शर्म सुखं निर्वाणरूपं सप्रथाः सर्वतः पृथु प्रथितमश्नुयामित्यर्थः, अथवा शर्म गृहं सर्वतः पृथु प्रथितं त्रिभूमिप्रासादं सर्वर्तुसुखसाधनस्थानं सुवारिमितं स्थानं देहीति सम्बन्धः ॥

---

अभि त्वा देव सवितरीशानं वार्याणाम्।
सदावन् भागमीमहे[५] ॥ १८ ॥

शुनःशेपो यूपे नियुक्तः सवितारमाह[६]—[ अभि ] अभीत्ययमुपसर्ग आभिमुख्ये वर्तते, त्वा त्वां हे देव दानादिगुण सवितः सर्वस्यः कर्मणः प्रसवितः अभ्यनुज्ञातः ईशानम् ईश्वरं वार्याणाम् वार्यं वृणोतेः[७], वरणीयानां प्रार्थनीयानामायुरादीनां सदा सर्वदा अवन् अवते रक्षणार्थस्य रूपं रक्षन्, किं? लोकपालत्वात् लोकानां भागम् कस्य? प्रकरणवशादायुषः, आयुरेव भजनीयत्वाद् भागशब्देनोच्यते अर्थः (?) ईमहे याच्ञाकर्मायं[८] याचा-

---

(१) अनुपलब्धमूलमिदम्। पाठोऽप्यत्र कदाचिद् भ्रष्ट इति प्रतिभाति ॥
(२) हस्तलेखेऽत्र पाठस्त्रुटितः, स चास्माभिः कोष्ठे लिखितः। तुलना निरु० ९।३२॥
(३) अत्र कदाचित् 'तपामि' इति पाठः स्यात्। एवमुपरिष्टादपि 'तवतेः' स्थाने 'तपतेः' इति ॥ अत्र दुर्गटीका—"कमहं तापयामीत्युद्गतः कण्टकः" इति। निरु० ९।३२
(४) शर्म इति सुखनाम निघ० ३।६॥ शर्म इति गृहनाम। निघ० ३।४॥
(५) ऋ० १।२४।३॥
(६) "स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन" इति। ऐ० ब्रा० ७।१६॥
(७) निरु० ५।१॥ (८) निघ० ३।१९॥

महे। द्विकर्मको याचिः "दुहियाचिरुधि"[१] इति स्मरणात्। त्वामायुर्याचामहे। त्वमप्यार्त्तानुग्राहकतयास्मानायुष्मन्तं कुर्वित्यभिप्रायः ॥

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्[२] ॥१९॥

भारद्वाजस्यार्षम्। प्रत्यक्षकृतोऽयं मन्त्रः। विश्वे देवाः विश्वशब्दः सर्वपर्यायः, सर्वे देवाः पृथिव्यादिस्थानाश्रयिणः शृणुत इमं हवम् आह्वानं विज्ञापनमित्यर्थः मे मम मत्प्रयुक्तमिति शेषः। के पुनस्ते? ये वाय्वादयो देवाः अन्तरिक्षे सप्तमीश्रुतेर्वर्तमाना इति शेषः। ये ये च सूर्यादयः उप द्यवि उपेत्ययमुपरीत्यस्य स्थाने द्रष्टव्यः। उपसर्गव्यत्ययश्च भाष्यकारेण दर्शितः अथापि निरित्येष समित्येतस्य स्थाने[३] इति। दिव उपरीत्यर्थः स्थ भवथ। ये ये च अग्निजिह्वा जिह्वा प्रधानमङ्गानां, तन्मूलत्वात् सर्वव्यापाराणाम्, तेनाग्नेः प्राधान्यमुच्यते; अग्निप्रधाना जातवेदःप्रभृतयः पार्थिवा देवाः, उत वा उतशब्दोऽप्यर्थे वाशब्दश्चार्थे वायुर्वा त्वा मनुर्वा त्वा[४] इति यथा। अपि च यजत्राः यजमानानां त्रातारः। के पुनस्ते? पृथिव्यादिस्थानाश्रयिणो देवास्त उच्यन्ते। कुतः? नैरुक्तानां त्रिस्थानव्यतिरिक्तस्य देवतान्तरस्याभावात्। पुरस्ताद् यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। ते सर्वे आसद्य आगम्य अस्मिन् बर्हिषि बर्हिश्शब्दो यज्ञनाम,[५] यज्ञे स्वेन भागधेयेन मादयध्वम् मदी हर्षे हृष्यथ। हृष्टेषु विश्वेषु देवेषु युष्मास्वभिलषितार्थसिद्धिर्भविष्यतीत्यभिप्रायः ॥

---

(१) महाभाष्य० १।४।५१॥ (२) ऋ० ६।५२।१३॥
(३) निरु० १२।७॥ (४) तै० सं० १।७।७॥ का० सं० १३।१०॥ निरु० १।५॥
(५) यास्केन नायं शब्दो यज्ञनामसु [ निघ० ३।१७ ] पठितः ॥

नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒
नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।
यजा॑म दे॒वान् यदि॑ श॒क्नवा॑म॒ मा
ज्याय॑सः॒ शंस॒ मा वृ॑क्षि दे॒वाः[1] ॥२०॥

शुनःशेपो विश्वान् देवान्[2] प्रार्थयते। नमो महद्भ्यः नमःस्वस्तिस्वाहास्वधा[3] इति नमोयोगा चतुर्थी, नमोऽस्तु महद्भ्यो महनीयेभ्यो वृद्धेभ्य इत्यर्थः। नमो अर्भकेभ्यः अर्भकशब्दोऽल्पपर्यायः दर्भमर्भकमित्यल्पस्य[4] इति वचनात्, अल्पेभ्यो बालेभ्यः। नमो युवभ्यः, ननु सर्व एव देवता नित्ययौवनयुक्ता अमृतपानात्, किमिदमुच्यते युवभ्य इति। सत्यमेवमेतत्, तथापि सर्वदेवानां वयोवस्थोच्यते इति विशेषः। नम आशिनेभ्यः अशू व्याप्तावित्य[स्माद् इनण्[5]] प्रत्ययो भवति, आशिनेभ्यो व्याप्तृभ्यः। कस्य? वयसः प्रकृतत्वाद् बाल्यस्य यौवनस्य स्थविरस्य च, वयसो व्याप्तृभ्यो मध्यमवयस्केभ्य इत्यर्थः। न केवलं नमस्कारमेव कुर्मः [किं तर्हि?] यजाम देवान् सर्वान् यदि शक्नवाम इत्यात्मनो दैन्यं प्रकटयति, को जानीयात् मखावसानं भविष्यतीति। सर्वो हि लोकः प्रयोजनापेक्षयैव प्रवर्तते इत्याह—मा मेति प्रतिषेधार्थो निपातो[6] वृक्षि इत्याख्यातेन संबध्यते ज्यायसः सर्वार्थानां प्राधान्यात् ज्यायश्शब्देनायुरुच्यते, तन्मूलत्वात् सर्वपुरुषार्थानाम्। ज्यायस आयुषः शंसम् आ छान्दसः परनिपातः, आशंसम्—आशंसनं प्रार्थनमित्यर्थः। वृक्षि वृश्चते-

(१) ऋ० १।२७।१३ ॥

(२) 'स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चया' इति। ऐ० ब्रा० ७।१६ ॥

ऋक्सर्वानुक्रमणीकारस्तु "अन्त्या दैवी" [१।२७] इत्यादिना 'देवा देवता' इत्याह। अत्राह षड्गुरुशिष्यः—'ननु स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चया' [ऐ० ब्रा० ७।१६] इति ब्राह्मणदर्शनाद् वैश्वदेवीयं स्यान्न तु दैवी। उच्यते। तत्र विश्व इति सर्वशब्दपर्यायः। न तु विश्वेदेवगणोऽभिप्रेतः' ॥ [पृ० ८६]

(३) अष्टा० २।३।१६ ॥ (४) निरुक्त ३।२० ॥

(५) माहिनमिति यथा। द्र० उ० २।५६ ॥ (६) निरु० १।५ ॥

रुत्तमपुरुषैकवचनं मध्यमपुरुषबहुवचनस्य स्थाने मा छेत्त हे देवाः युष्मत्प्रसादादायुरविनश्वरमस्माकमस्त्वित्यभिप्रायः ॥

---

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् ।
अग्निर्नः पार्थिवेभ्यः[१] ॥ २१ ॥

चक्षोरार्षम् । अनेन मन्त्रेण तिस्रः प्रधानदेवताः प्रार्थ्यन्ते । तथा हि—तिस्र एव देवता इति नैरुक्ताः, अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः[२] इति प्रतिजानीते । सूर्यः सुवति सरतीति वा सूर्यः[३] । अथवा सूर्यः स्वामी सर्वस्येति, सोः सन् ( ?, स्वयं सन् सूर्यो ) वर्णविपर्ययेण । तथा च श्रूयते— आदित्य एषां भूतानामधिपतिः[४] इति । सूर्यः नः अस्मान् दिवः द्युलोकात् द्युलोकोद्भवा[ द् भया ]दित्यर्थः पातु रक्षतु । वातः [ वायु ]श्च अन्तरिक्षात् अन्तरिक्षभवाद् भयादस्मान 'पातु' इत्यनुषङ्गः । [ अग्निः ] अग्निश्च नः अस्मान् पार्थिवेभ्यः विभक्ति- ( ?, वचन )व्यत्ययः पार्थिवात् पृथिवीभवाद् भयात् 'पातु' इत्यनुषङ्गः । त्रयाणां लोकेश्वराणां प्रसादेन सर्वदुःखोपशमोऽस्त्वित्यभिप्रायः ॥

---

उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि[५] ॥२२॥

मधुच्छन्दस आर्षम् । [ उप ] उपोपसर्गश्रुतेर्योग्यो ल्यबन्तपदाध्याहारः कार्यः । उपगम्य त्वा त्वां हे अग्ने दिवेदिवे अहर्नामैतत्, सप्तम्येकवचनमेव समाम्नायेषु[६] समाम्नातम्, अहनि । दोषावस्तः अहोरात्रनामैतदन्यत्र[७], इह तु अहःशब्देन पौनरुक्त्यपरिहारार्थमेवं योजनीयम्,

(१) ऋ० १०।१५८ । १ ॥ (२) निरु० ७५ ॥
(३) तुलना—महाभाष्य० ३।१।११४ ॥ (४) ऐ० ब्रा० ७ । २० ॥
(५) ऋ० १।१।७ ॥ (६) निघण्टुषु इत्यर्थः । निघ० १।९ ॥
(७) समुचितान्यहोरात्रनामानि यास्केन न पठ्यन्ते ॥

दोषेति रात्रिनाम[1] वस्तरिति वसतिरुच्यते, रात्रिवासे[2] अहनि रात्रौ चेत्यर्थः। धिया धीरिति कर्मनाम[3], यागाख्येन कर्मणा वयं नमः नम इत्यन्ननाम[4], अन्नं हविराज्यं वा भरन्तः इति पात्रस्थं हविरुद्वहन्त इत्यर्थः। आ इमसि आकारः श्रद्धायाम् महत्या श्रद्धया युक्ताः। तथा च स्मरणम्[5]—इमसि इणो रूपमेतत्, गमनेनात्राराधनं लक्ष्यते। आराधयामः उपगम्य श्रद्धया संहृतहविष्कारास्त्वां यच्छामह इत्यर्थः ॥

---

अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः।
तं जानन्नग्नऽआरोहाथा नो वर्धया रयिम्[6] ॥२३॥

विश्वामित्रस्यार्षम्। अरणिं प्रति समारोप्यमाणोऽग्निरुच्यते[7]। अयमिति सन्निकर्षार्थं प्रतिनिर्दिश्यते। योनिशब्दोऽयमुभयलिङ्गः। तथाहि लिङ्गानुशासनकारः पठति—'श्रोणियोन्यूर्मयः पुंसि च'[8] इति। 'समुद्रं वः प्रहिणोमि स्वां योनिम्'[9] इति च प्रयोगदर्शनात्। अयं ते तव योनिः अरणाख्यः काष्ठविशेषः ऋत्वियः ऋतुप्रभवः। ऋतुः कालोऽर्त्तेर्गतिकर्मणः, स हि गमयति भूतानि जरयतीत्यर्थः। यतः काष्ठविशेषात् पूर्वं जातः त्वम् अरोचथाः रुच दीप्तौ दीप्तवान् अभूः। तम् योनिमात्मजन्मनि निमित्तमात्रं जानन् हे अग्ने आरोह आरूढश्च अथ अनन्तरं नः अस्माकं वर्धय रयिम्, रयिरिति धननाम रातेर्दानकर्मणः[10], दीयते हि तत् दृष्टादृष्टार्थं

---

(१) 'दोषावस्तः' इति 'दोषावस्तृ' शब्दस्य संबोधनस्य रूपम्। यत्तु सायणेन—'दोषावस्तः रात्रावहनि च·········दोषाशब्दो रात्रिवाची, वस्तर् इत्यहर्वाची। द्वन्द्वसमासे कार्तकौजपादित्वात् (अष्टा० ६।२।३७) आद्युदात्तः' इत्युक्तम्, तत्सर्वथाऽविचारितरमणीयम्, स्वरप्रक्रियानभिज्ञत्वस्य च द्योतकम्। विशेषतो द्र० वैदिकस्वरमीमांसा पृ० ११०-१९५ (द्वि० सं०) ॥

(२) निघ० १।७ ॥ (३) निघ० ५।१ ॥ (४) निघ० २।७ ॥

(५) अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति ॥ (६) तै० सं० १।५।५ ॥ ऋ० ३।२९।१० ॥

(७) "अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयति" इति तै० सं० ३।४।१० ॥

(८) पाणिनीयं लिङ्गा० १।८ ॥ (९) अथर्व १०।५।२३ ॥ शां० श्रौ० ४।११।६ ॥

(१०) निरु० ४।१७ ॥

देवपितृमनुष्येभ्यः। त्वत्प्रसादादस्माकं धनमस्तु इत्याशास्यते, धनमूलत्वात् सर्वक्रियाणाम्। तथा ह्याप्तवचनम्—

धनमूलाः क्रियाः सर्वा द्रव्यहीने कुतः क्रियाः[1]। इति ॥

उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्।
आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे[2] ॥२४॥

पुनर्निर्मथ्यमानमग्निमभिमन्त्रयते[3]। [उपावरोह] पृथिवीलोकमितिशेषः। हे जातवेदः जातविद्य, जाते भूतजाते विद्यमानः पुनः उपावरुह्य त्वम् त्वं देवेभ्यः यागाङ्गभूतेभ्यो हव्यम् हविराज्यादिकं वह प्रापय। नः अस्माकं त्वयि हुतमिति शेषः, प्रजानन् प्रकर्षेण जानन् स्वमधिकारमस्मद्भक्ततां वा। तदनन्तरं आयुः शतसंवत्सरलक्षणं च [प्रजाम्] प्रजां च दृष्टादृष्टोपकारिणीं रयिम् धनं च तद्विधं अस्मासु वेदोदितकर्मणि रतमानेषु धेहि धारय स्थापयेत्यर्थः। अजस्रः अननुगतस्त्वं सदा दीदिहि नः दीप्यस्व नोऽस्माकं दुरोणे 'दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः[4]' दुरवे [गृहे] इत्यर्थः, देवयजनाख्येऽस्माभिराराध्यमान इति शेषः। तदेवमुच्यते यस्मात्त्वयि [वि]राजमाने भयं न विद्यते। [तथा च श्रूयते–] "एष वै व्याघ्रः कुलगोपो यदग्निः[5]" [इति]

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः[6] ॥२५॥

वसिष्ठस्यार्षम्। इन्द्र उच्यते स च मध्यमस्थानः। [अभि] अभ्युपसर्गश्रुतेर्योग्यालम्बनपदाध्याहारः कार्यः। अभिगम्य त्वा त्वां हे शूर,

(१) अनुपलब्धमूलमिदम्। (२) तै० ब्रा० २।५।८ ॥

(३) "उपावरोह जातवेद इति निवर्तमानमभि मन्त्रयते" इति आप० श्रौ० ५।१०।१२ ॥
"उपावरोह.........इत्यात्मनोऽरण्योरुपावरोह्य मन्थनम्" इति। [शां० श्रौ० २।१७।८] अत्र 'अजस्रः' इत्यस्य स्थाने 'अरिष्टः' इति पाठः ॥

(४) निरु० ४।५ ॥ (५) तै० सं० ६।२।५ ॥ (६) ऋ० ७।३२।२२ ॥

शूरः शवतेर्गतिकर्मणः[1] शवति गच्छति शत्रूनिति शूरः, शत्रूणामभिभवितः ! नोनुमः अत्यर्थं स्तुमः। अदुग्धाइव धेनवः इत्यभिलाषातिरेकं दर्शयति प्रस्नुतपीवरस्तन्यो धेनवो वत्सोत्सुकतया [यथा] वावश्यन्ते। तत्कीदृशं ईशानमस्य ईश्वरमस्य जगतः जङ्गमस्य स्वर्दृशम् स्वःशब्दः सर्वपर्यायः[2]सर्वस्य शुभाशुभस्य द्रष्टारं लोकपालत्वाद् ईशानम् ईश्वरं हे इन्द्र तस्थुषः स्थावरस्य। कथमयं सर्वस्य जङ्गमस्य स्थावरस्य चेश्वरः ? उच्यते—इन्द्रस्य हि रसानुप्रदानं कर्म,[3] तदधीनत्वात् सर्वभूतानां, तस्मादसावेवमुच्यते इति॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।
अश्वायन्तो मघवन् इन्द्र वाजिनो गव्यन्तस्त्वा हवामहे[4] ॥२६॥

तस्यैवार्षम्। [न] नेति प्रतिषेधार्थो निपातोऽस्तिक्रियामाक्षिपति, नास्ति त्वावान् त्वत्तुल्यः, अन्यो दिव्यः दिवि भवो द्युलोके त्वत्सदृशो नास्तीत्यर्थः। न पार्थिवः नापि पार्थिवः नापि पृथिव्यां भवः, पृथिव्यामपि त्वत्तुल्यो नास्तीत्यर्थः। न जातः न जनिष्यते। कुतः ? निरतिशयदानादिगुणयोगात्, यत एवमतो ब्रूमः अश्वायन्तः अश्वायन्तः अश्वमात्मन इच्छन्तः हे मघवन्, मघमिति धननामधेयं, मंहतेर्दानकर्मणः[5] भूम्नि चायं मतुप्प्रत्ययः, त्रैलोक्यगतेन धनेन धनवान्। हे इन्द्र वाजिनः वाजमन्नं हविरुच्यते तेन तद्वन्तः, सम्भृतहविष्का इत्यर्थः गव्यन्तः गां च कामयमाना महतीं विभूतिमिच्छन्त इत्यभिप्रायः। त्वा त्वां हवामहे आह्वयामः आह्वानेनात्र यागो लक्ष्यते, यजामहे इत्यर्थः॥

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा।
सरस्वती स्तोम्या भूत्[6] ॥ २७ ॥

(१) निरु० ४।१३॥ (२) सर्वपर्यायेष्वयं 'स्वर्' न प्रसिद्धः।
(३) "अथास्य कर्म रसानुप्रदानम्" इति। निरु० ७।१०॥ (४) ऋ० ७।३२।२३॥
(५) निरु० १।७॥ (६) ऋ० ६।६१।१०॥

भारद्वाजस्यार्षम् । उत [उत]शब्दो वार्थे, स च समुच्चये द्रष्टव्यः नः अस्माकं चेत्यर्थः। [प्रिया] प्रियासु निर्धारणसप्तम्येषा प्रियाणां सर्वासां देवतानां मध्येऽस्माकमियमेव प्रियतमा, सप्तस्वसा सप्तानां लोकानां स्वसा सहभावात् । अथवा सप्तानां स्वराणां स्वसा सु असा असु क्षेपणे व्यापारयतीत्यर्थः। सुजुष्टा शोभनया परिचर्यया सेविता, शोभनैर्वा पुण्यकृद्भिः सेविता, सरस्वती स्तोम्या स्तोतव्या भूत् भगवती सरस्वती सर्वदास्माभिस्स्तूयत इत्यर्थः ॥

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः[1] ॥२८॥

विश्वामित्रस्यार्षम् । इन्द्र उच्यते । प्रत्यक्षकृतोऽयं मन्त्रो मध्यमपुरुषयोगात् । सजोषाः जुष प्रीतिसेवनयोः इत्यसुन्प्रत्ययान्तस्यैतद्रूपम् । सम्प्रीयमाणोऽस्मत्परिचर्ययेति शेषः। हे इन्द्र सगणः मध्यमस्थाना मरुदादयः तैः सहितः। मरुद्भिः मरुच्छब्देन सर्वा एव देवता उच्यन्ते । कुतः ? मध्यमस्थानानां मरुतां 'सगणः' इत्येतेनैवाभिहितत्वात् । अथवा 'सगणः' इत्युक्तेऽपि मरुतां पृथगुपादानं प्राधान्यख्यापनार्थम् । 'ब्राह्मणा आयाता वसिष्ठोऽप्यायातः'[2] इति यथा । प्राधान्यं च वृत्रवधादिसाहचर्ययोगात् । तथा च श्रूयते—मरुद्भिः सह सख्यं ते अस्तु[3] । तैः सह सोमं पिब, अयं खलु प्रियतमो हविर्भागः। वृत्रहा वृत्रस्यासुरस्य मेघस्य वा हन्ता । प्रत्यक्षकृतत्वात् मन्त्रस्य 'सजोषाः सगणो वृत्रहा विद्वान् इत्येतेषामनामन्त्रितत्वादेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । य एवंविधः स त्वं पिब इति सम्बन्धः। हे शूर विद्वान् जानन् , किं ? सर्वशब्दराशिं, अस्मद्भक्ततां वा, लोकपालत्वात् लोकवृत्तं वा, पीत्वा च सोमं वीर्यवृद्धः सन् जहि मारय शत्रून् मदोत्सेधयुक्तान् । [अप] अपेत्ययमुपसर्गो नुदस्व

(१) ऋ० ३।४७।२॥ (२) द्र० महाभाष्यप्रदीपः [ पस्पशाह्निके ]॥
(३) अनुपलब्धमूलमिदम् ॥

इत्यनेन सम्बध्यते । मृधः मृध इति संग्रामनाम[1] मृधा करोतीति णिच् ण्यन्तात् क्विपि णेरनिटि[2] [ इति ] णिलोपः मृधः संग्रामकारिणः प्रतियोधनसमर्थान् नुदस्व नुद प्रेरणे प्रेरय इतः स्थानादपसारयेत्यर्थः । अथ अनन्तरं दुष्टनिग्रहाद् अभयं सर्वप्रकारं कृणुहि कुरु, विश्वतः सर्वस्माद् भूतजातात् नः अस्माकम् । यतो लोकपालानामेतद् व्रतं दुष्टनिग्रहः शिष्टपरिपालनं चेति ॥

---

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्वायाथास्तं विपरेतन[3] ॥ २९ ॥

सूर्या नाम ब्रह्मवादिनी, तस्या आर्षम् । वधूदर्शनार्थं समेतानाह— सुमङ्गलीः शोभनानि मङ्गलादीनि विवाहलक्षणानि यस्याः सा सुमङ्गलीः, छान्दसत्वात् "हल्ङ्या[4]"दिलोपाभावः । इयं वधूः इति साभिनयं दर्शयति । अचिरोढा स्त्री वधूरुच्यते । अतः इमां समेत पश्यत, दृष्ट्वा च सौभाग्यं भगशब्देन श्रीरुच्यते[5] तद्वता सौभाग्यं श्रीमत्त्वं ( ?, श्रीमत्त्वं ) अस्यै दत्वाय, क्त्वो यक्[6] इति यक्प्रत्ययश्छान्दसः[7] दत्वा अथ अनन्तरं

---

(१) निघ० २।१७॥

(२) अष्टा० ६।४।५१॥

(३) ऋ० १०।८५।३३॥

(४) अत्र निरुक्तसमुच्चयकृद् वररुचिः "केवलमामक" [ अ० ४।१।३० ] इत्यादिना ङीप्प्रत्यय इति मन्यते, अत एव तत उत्तरस्य सोश्छान्दसत्वाल्लोपाभावं प्रतिजानीते ।

वस्तुतस्त्वत्र "छन्दसीवनिपौ च वक्तव्यौ" [ अष्टा० ५।२।१०९ वार्त्तिकम् ] इत्यादिना मत्वर्थ ईप्रत्ययः, न ङीप् । अत एव सोर्लोपाभावः । एवं च छान्दसत्वात् लोपाभावप्रतिविधानं प्रौढिवादमात्रम् । यत्र तु 'केवलमामक' इत्यादिना ङीप् भवति, भवत्येव तत्र तस्य लोपः । यथा "सा नो अस्तु सुमङ्गली" [ अथ० २।१९।२ ] इति ॥

(५) श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । द्र० काशिका ४।४।१३१ ॥

(६) अष्टा० ७।१।४७ ॥

(७) यगागमो भवति, न तु प्रत्ययः । अत्र कदाचित् पाठोऽशुद्धः संजात इति प्रतिभाति ॥

अस्तम् अस्तमिति गृहनाम[1] गृहं विपरेतन विभिन्नपथा गच्छत। एददुक्तं भवति—मनोहरवपुयुक्तामाभरण[ालंकृत[2]]सर्वगात्रीं स्त्रियं दृष्ट्वा चक्षुषः फलमनुभूय दत्त्वा चाशिषमस्यै स्वं स्वं गृहं [प्रति गच्छत इत्येतदा[2]] शास्यते ॥

## ॥ इति वाररुचे निरुक्तसमुच्चये प्रथमः कल्पः ॥

(१) निघ० ३।४ ॥
(२) अत्र हस्तलेखे स्थानं रिक्तमस्ति। तस्यास्माभिर्यथाशक्ति पूर्तिः कृता ॥



# ॥ अथ द्वितीयः कल्पः ॥

पूर्वस्मिन् कल्पे प्रकीर्णरूपेण निर्वचनक्रमः प्रदर्शितः । इदानीं "ज्ञात्वाऽनुष्ठानम्[1]" इत्युक्तत्वात् नित्यकर्मविहिता मन्त्रा व्याख्यायन्ते—

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् ।
सत्यं चित्रश्रवस्तमम्[2] ॥ ३० ॥

विश्वामित्रस्यार्षम् । मित्रो मध्यमस्थानदेवतासु[3] पठितत्वात् मध्यमस्थानत्वेन निरुक्तः[4] । द्युस्थानेऽपि मित्रोऽस्ति[5] स इह निरुच्यते । प्रथमं तावदयं यजुश्शाखानुरोधेन[6] व्याख्यायते ।

मित्रस्य [ मात्वा ] निर्माय [ उदयेन ] कृत्स्नं जगत् त्रायत इति मित्रः, जगत्त्रयत्राणदक्षो ह्यसावुदेति । इह देवतातत्त्वं प्रति बहु विश्राम्यति भेदः । केचिदाहुः[7]—पुरुषविधं देवतायाः । कुतः ? बाहुमुष्ट्यादेः श्रूयमाणत्वाद् अदनादिक्रियायोगाच्च । अपरे पुनः—अपुरुषप्रकारं मन्यन्ते । कुतः ? प्रत्यक्षभूतेष्वग्न्यादिषु तस्यानुपलभ्यमानत्वात्, वस्तुसत्त्वमात्रमेव इति । उभयप्रकारमित्यन्ये—उभयथा मन्त्रेषु श्रूयमाणत्वात् । पुरुषविधत्वेन केषुचिन्मन्त्रेषु श्रूयते—ऋष्वा त इन्द्र स्थवि-

---

(१) अनुपलब्धमूलमिदम् ॥ (२) तै० सं० ३।४।११ ॥ पाठभेदेन ऋ० ३।५९।६ ॥
(३) निघ० ५।४ ॥ (४) निरुक्तकृता यास्केनेति शेषः । द्र० निरु० १०।२१ ॥
(५) यास्केन द्युस्थानदेवतासु मित्रो न समाम्नातः । ग्रन्थकृतोऽत्र कोऽभिप्राय इति न विद्मः । कदाचिदन्यैराचार्यैर्द्युस्थानेऽपि समाम्नातः स्यात् ॥
(६) तैत्तिरीयशाखानुरोधेन इत्यर्थः । एतेन ग्रन्थकृत् तैत्तिरीयः स्यादिति सम्भाव्यते अत एव तैत्तिरीयशाखां प्रायश उद्धरति । तैत्तिरीयप्रातिशाख्यव्याख्याताऽपि कश्चिद् वररुचिः श्रूयते ( द्र० सं० व्या० शास्त्र का इतिहास भाग २ ( पृष्ठ ३१२ ) स अयमेवेति सम्भाव्यते ।
(७) अत्र 'अथाकारचिन्तनं देवतानाम्' इत्यादिनिरुक्तप्रकरणम् [ ७।६,७ ] अनुसंधेयम् ॥

रस्य बाहू[1] इति । केषुचिद् वस्तुमात्रेण—अगन्म ज्योतिरुत्तमम्[2] [इति]। सर्वथा मन्त्राक्षरव्यतिरिक्तं देवतायाः प्रमाणं नास्ति इति सिद्धान्तः[3]। मित्रशब्दप्रसङ्गेन देवतास्वरूपमपि मनागुक्तमलमिति प्रसङ्गेन । प्रकृतमभिधीयते । निर्वचनानन्तरम्—समिन्वानो द्रवतीति वा[4] [इति]। डुमिञ् क्षेपणे द्रु गतावित्येतयोर्धात्वोरेतद्रूपम् । सम्यक् प्रक्षिपन् सर्वत्र स्वज्योतिः द्रवयति अन्तरिक्षमिति मित्रः। मेदयतेर्वा घ्नन्प्रत्ययः, तस्य सर्वमसावुदकेन स्नेहयति। तथाहि–ते यदाऽमुतोर्वाञ्चः पर्यावर्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते[5] इति निरुक्तवचनम् । मित्रस्य भगवत आदित्यस्य चर्षणीधृतः चर्षणयो मनुष्याः, चायतेर्ऋषतेश्च चायतिः पश्यतिकर्मा, ऋषतिर्गतिकर्मा । पश्यन्ति हि ते सदसत्प्रख्यागमेन, गच्छन्ति पदुसाध्यमुपायेन । प्रदर्शनार्थमिदं चर्षणीग्रहणम्, चर्षणीप्रभृतीनां भूतजातानां वृष्टिप्रदानादिना धारयितुः श्रवः श्रवशब्देन तेजश्चान्नं च यशश्चोच्यते । तथा च प्रकरणश एव निर्वक्तव्याः इति भाष्यकारवचनम् । श्रूयते वेदशिरसि, आश्रीयते वा योगि[भि]रिति श्रवःशब्देनादित्यमण्डलमुच्यते । देवस्य दानादिगुणयुक्तस्य स्तोतॄणामभिलषितार्थप्रदस्य, दीप्यमानस्य वा भुवनविभूत्यै द्युस्थानस्य वा, सानसिं मण्डलविशेषणमेतत् । 'वन षण सम्भक्तौ' इत्यस्मिन् प्रत्ययान्तस्यैतद्रूपं सानसि । छान्दसत्वादमो लुगभावः । सानसिं संभजनीयं सर्वभूतानाम् तथा च श्रूयते—उद्यन्तं वा एतं सर्वाः प्रजा अपि नन्दतीति सत्यं बत तमतीति[7] । सत्यम् सर्वदा गमनस्वभावम् । तथा चाहुः पौराणिकाः—

(१) ऋ० ६।४७।८॥ (२) ऋ० १।५०।१०॥

(३) तुलना—'सर्वथाभिधानव्यतिरेकेण देवतायाः सद्भावे रूपविशेषे च मन्त्रशब्द एव प्रमाणमिति सर्वथाप्यविरोधः' इति स्कन्दस्वामी । निरु० टी० भा० ३ पृ० ४६ । अयमेवपक्षः स्कन्दस्वामिना ७।५ (पृ० ३६) व्याख्यानेऽप्युपस्थापितः। मीमांसायाम् (९।१।९ सूत्रे) अपि शबरस्वामिना मन्त्रमयी शाब्येव देवता स्वीक्रियते न विग्रहवती ।

(४) निरु० १०।२१॥ (५) निरु० ७।२४॥ (६) निरु० १३।१२॥

(७) अनुपलब्धमूलमिदम् ॥

"आदित्यः सर्वदा.........तीति[१]"। तथा च श्रूयते—"न तिष्ठति न निमिषन्त्येते देवा-[नां स्पश इह ये चरन्ति[२]]" इति। स्पश इति देवदूता आदित्यादय उच्यन्ते, पश्यन्ति ते सर्वप्राणिनां चेष्टितं शुभमशुभं वा साक्षिभूतत्वात्। तथा च श्रूयते—"पिता कुत्सस्य चर्षणिः"[३] इति। अस्य विवरणम्—पिता कुत्सस्य कर्मणः चायितादित्यः[४] इति। अथवा सत्यं सत्सु विद्यमानेषु स्तम्भकुम्भादिषु तायते,[५] तेषां प्रकाशकमित्यर्थः चित्रश्रवस्तमम् चित्रं चायनीयं दर्शनीयमित्यर्थः, श्रवस्तेजो येषां ते चित्रश्रवसोऽग्न्यादयः, तेषामतिशयेनोत्कृष्टं चित्रश्रवस्तमम्। तथा चोक्तम् "आदित्यस्तेजसां दिवि"[६] इति। साकाङ्क्षत्वाद् वन्दामह इति वाक्यशेषः।

"अवो देवस्य सानसि द्युम्नम्"[७] इति दाशतयीषु[८] पाठः। तथा सति [अवः] अवतेरक्षणार्थस्यासुन्प्रत्ययान्तः, अवः पालयिता। द्युम्नशब्देन यशोऽन्नं वाभिधीयते, द्योतयतीति द्युम्नमुपायं वितते द्वय द्वयस्तत् (?) द्योतयति यशःसाधनत्वाद् यश उच्यते। अत्ति च भौमं रसम्। एवमुभयथा मन्त्रो निरुक्तः।

मित्रो जनान् यातयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभि चष्टे सत्याय हव्यं घृतवद् विधेम ॥३१॥

विश्वामित्रस्यार्षम्। मित्रः निरुक्तः, आदित्यः[१०] जनान् जायन्त इति जनाः प्राणिन उच्यन्ते, सर्वप्राणिनः यातयति प्रयत्नेन चेष्टयति प्रजानन् किं? यस्य यत् गर्भाधानादिविहितं तदिति शेषः। तथा च स्मर्यते—

(१) अनुपलब्धमूलमिदम् (२) ऋ० १०।१०।८ (३) ऋ० १।४६।४ (४) निरु० ५। २४॥
(५) द्रष्टव्यमग्रे एकत्रिंशमन्त्रस्य व्याख्याने सत्यपदविवरणम्।
(६) मनु० ८।८२ इतोऽग्रे प्रक्षिप्तरूपेणोपलभ्यमाने श्लोके॥ (७) ऋ० ३।५९।६॥
(८) दश अवयवा (मण्डलरूपा) अस्या इति दशतयी, दशतय्येव दाशतयी—ऋक्संहिता। अत्र 'दाशतयीषु' इति बहुवचननिर्देशात् 'सर्वासु-ऋक्शाखासु' इति गम्यते॥
(९) तै० सं० ३।४।११॥ पाठभेदेन ऋ० ३।५९।१॥
(१०) अयं मन्त्रो निरुक्ते [१०।२२] मध्यमस्थानदेवतापरो व्याख्यातः॥

पञ्चैतानि [हि] सृज्यन्ते गर्भस्थस्यैव देहिनः ।
आयुः कर्म च वित्तं च विद्या निधनमेव च[१] ॥

इति । तदनुरूपं व्यापारयति इत्यर्थः । अथवा यातयति गमयति प्राणिनः कृष्यादिकं मधु प्रजानन् जन जनने इत्येतस्य, [प्रकर्षेण जा]यमानः उद्यन्नुद [य] गिरेरित्यर्थः । तथा च श्रूयते—उद्यन् खलु वा आदित्यः[२]...। [मित्रः] मित्र एव वृष्टिप्रदानादिना दाधार धारयति पृथिवीम् पृथिवीशब्देन तद्गतं भूतजातम् उच्यते । पृथिव्याधारभूतं भूतग्रामम् [उत] उत शब्दोऽप्यर्थे द्यांशब्दात्परो द्रष्टव्यः । द्याम् द्यामपि दिवं चेत्यर्थः । किं च मित्रः कृष्टीः, कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति[३] इति । कथं ? बहुमानात् दृष्टादृष्टार्थेन कर्मणा तद्वन्तो मनुष्याः अनिमिषा तृतीयैकवचनस्य सुपां सुलुक्[४] इत्याकारः, अनिमिषेण। केन? सामर्थ्याद् दिव्येन चक्षुषा, अनिमिषा देवा इति प्रसिद्धौ । तथा च श्रूयते—न तिष्ठन्ति न निमिषन्त्येते'[५] इति । अभिचष्टे पश्यतिकर्मायम्, आभि[मु]ख्येन पश्यति लोकपालत्वात् पुण्यपापकर्मणि च वर्तमानान् । साकाङ्क्षत्वाद् यत्तच्छब्दावध्याहार्यौ । य एवंविधः तस्मै मित्राय, सत्याय सत्यभूताय हव्यं हविश्चर्वादि घृतवत् घृतेन च युक्तं विधेम विदधतिर्दानकर्मा ददाम । त्वत्पर्यासक्तमनसो वयमिति वाक्यशेषः ।

"ब्रुवाणः"[६] इति पाठे ब्रुवाणशब्दो यजमानः[७] (?, ह्यादित्यवचनः) प्राणरूपत्वात् । तथा च श्रूयते—"तस्मादेनं प्राण इत्याचक्षते"[८] [इति] ॥

---

(१) चाण० नी० ४।१। तत्र पूर्वार्धोत्तरार्धयोर्व्यत्यासो वर्तते ॥
(२) अनुपलब्धमूलमिदम् । ऐतरेयब्राह्मणे [५।३१] तु 'उद्यन् खलु वा आदित्यः सर्वाणि भूतानि प्रणयति' इत्येवं पाठ उपलभ्यते । अथर्ववेदे [१३।३।१३] तु 'स मित्रो भवति प्रातरुद्यन्' इति पठ्यते । (३) निरु० १०।२२॥ (४) अष्टा० ७।१।३९॥ (५) ऋ० १०।१०।८॥
(६) ऋग्वेदे [३।५९।१] 'प्रजानन्' इत्यस्य स्थाने 'ब्रुवाणः,' 'सत्याय' स्थाने 'मित्राय', 'विधेम' इत्यस्य स्थाने 'जुहोत' इति पाठः ॥
(७) निरुक्ते [१०।२२] तु "प्रब्रुवाणः शब्दं कुर्वन्" इत्येवं व्याख्यातः ।
(८) अनुपलब्धमूलमिदम् । तुलनीयम्—आदित्यो ह वै प्राणः । प्रश्नो० १।५॥

प्र स मि॑त्र मर्तो॑ अस्तु प्रय॑स्वान् यस्त॑ आदित्य शिक्ष॑ति व्रतेन॑ ।
न ह॑न्यते॒ न जीय॑ते॒ त्वोतो॒ नैन॒मंहो॑ अश्नो॒त्यन्ति॑तो न दू॒रात्[1] ॥३२॥

विश्वामित्रस्यैवार्षम् । प्र प्रशब्दोः 'अस्तु' इत्याख्यातेन संबध्यते । हे मित्र मर्तः मर्त इति मनुष्यनाम[2] मरणधर्मत्वात्, म्रियते ह्यसौ यदा कदाचित् । तथा ह्याप्तवचनम्—जातस्य हि मरणं ध्रुवम्[3] । अस्तु प्रास्तु प्रकर्षेणास्तु भवतु, भृशं प्रयस्वान् प्रय इत्यन्ननाम[4], तदस्यास्तीति तद्वत्, भूम्नि चायं मतुप्प्रत्ययः बह्वन्नो भवतु । बह्वन्नो हि लोके नितरां विराजते । तथा च श्रूयते—तस्मादयस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजते[5] इति । कोऽसौ ? यजमानः श्रद्धधानः ते तुभ्यं आदित्य आदितेः पुत्र शिक्षति शिक्षति चेद् दानकर्मा[6] ददाति व्रतेन व्रतमिति कर्मनाम[7] कर्मणा यागाख्येन, किं ? सामर्थ्याद् हविश्चर्वादि । न केवलमन्नवानेव सम्भवति, [ किं तर्हि ] न हन्यते मृत्युनापि पुरा शतसंवत्सरलक्षणादायुषः न जीयते ज्या वयोहानौ नापि हीयते दुःखादिभिः । अथवा जी जये इत्यस्यैतद्रूपम् न जीयते शत्रुभिः । त्वा ऊतः इत्यवतेरक्षणार्थस्यैतद् रूपम्, त्वया रक्षितोऽनुगृहीत इत्यर्थः । [ न ] न इत्येष निपातोऽश्नोतीत्याख्यातेन सम्बध्यते । एनम् त्वदाराधनतत्परम् अंहः [ अंह ]शब्दो हन्तेर्निरूढोपधो विपरीताक्षरोऽसुन्प्रत्ययान्तो निरुक्तः[8] पापपर्यायः । हन्ति ह्येतत्कर्तारं यदा कदाचित् । तथा च स्मरणम्—

अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।
ततः सपत्नान् जयति समूलस्तु विनश्यति ॥[9]

इति । त्रिप्रकारकमपि पापं अश्नोति नञोऽत्र संबन्धः । नाश्नोतीति नाश्नुते न बाधते इत्यर्थः । अन्तितः दूरप्रतियोगित्वादन्तिशब्दः समीप-

(१) तै० सं० ३।४।११॥ ऋ० ३।५९।२॥ (२) निघ० २।३॥ (३) गीता २।२७॥
(४) निघ० २।७॥ तत्र 'श्रवः' इति पाठान्तरमप्यस्ति । (५) ऐ० ब्रा० १।५॥
(६) निघ० ३।२०॥ (७) निरु० २।१३॥
(८) अत्र निरुक्तम्—अंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् विपरीताद् इति । निरु० ४।२५॥
(९) मनु० ४।१७४॥

वचनः, न दूरात् नापि दूरात् पूर्वजन्मनश्च । पञ्चम्येकवचनमेतत् सप्तम्येकवचनस्थाने द्रष्टव्यम्—इह जन्मनि पूर्वजन्मनि च, कृतमिति वाक्यशेषोऽध्याहार्यः । एतदुक्तं भवति—'परिदृढभक्तिपुरःसरं भगवन्तं भक्तवत्सलमादित्यं परिचरतः सर्वाः सम्पदो भवन्तु' इत्यभिप्रायः ।

---

आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन्[1] ॥२३॥

उद्यन्नादित्यः सवितृशब्देनोच्यते[2] । [आ] आकरो वर्तमान इत्यनेन सम्बध्यते । सत्येन सत्सु विद्यमानेषु स्तम्भकुम्भादिभावेषु तायमानेन[3] । "कृष्णेन" इति दाशतयीष्वाह[4] । तथा सति कृष्णं कर्षतेर्नाशार्थस्य, तमआदेर्नाशयिता, रजसा रजःशब्देन तेजश्चोदकं च लोकश्च शोणितं चाहश्चोच्यते[5] । इह प्रकरणवशात् तेजोऽभिधीयते । वर्तमानः आङोऽत्र [संबन्धः] आवर्तमानः परिभ्रमन् नेमिधर्मेण निवेशयन् प्रवेशयन् कुर्वन्नित्यर्थः अमृतम् अन्नं जीवनमित्यर्थः मर्त्यं च मरणं च, त्वदायत्तं हि जीवनं मरणं च, कालस्य हेतुभूतत्वात्—कालः पचति भूतानि कालः संहरते प्रजाः[6] । अथवा निवेशयन् अमृतं द्वितीयैकवचनं चैतद् बहुवचनस्य स्थाने द्रष्टव्यम् अमृतान् अमरणधर्माणो देवान्, एवमेतत् मर्त्यं च मरणधर्माणो मनुष्यान्, देवलोकं मनुष्यलोकं चेत्यर्थः । स ह्यात्मीयेन तेजसा सर्वं व्यापारयति । अतश्च हिरण्ययेन हिरण्मयेन [सविता] सर्वस्य कर्मणः प्रसविता अभ्य-

(१) तै० सं० ३।४।११॥ पाठभेदेन ऋ० १।३५।२॥
(२) संवर्तयंस्तमः सूर्यादुपसं च प्रवर्तयन् । दिवाकरः प्रसौत्येकः सविता तेन कर्मणा ॥ इति बृहद्देवताकारः । बृ० दे० २।६३॥
(३) द्रष्टव्यं पूर्वं त्रिंशन्मन्त्रव्याख्याने सत्यपदविवरणम् । (४) ऋ० १।३५।२॥
(५) अत्र निरुक्तम्—रजो रजतेः । ज्योती रज उच्यते । उदकं रज उच्यते । लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते इति । निरु० ४।१९॥
(६) तुलना—म० भा० आदि० १।२४८ ॥

नुज्ञाता रथेन आ देवो याति आयाति देवो दानादिगुणयुक्तः भुवना विपश्यन् [ भुवना ] "शेश्छन्दसि बहुलम्"[1] इति शिलोपः भुवनानि भूतजातानि साक्षिरूपेण स्थितः सन्नित्यर्थः ॥

उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्[2] ॥३४॥

प्रस्कण्वस्यार्षम् । एतेन द्विप्रकारं ज्योतिरादित्याख्यं बाह्यमभ्यन्तरं चाभिधीयते । [ उद् ] उदित्ययमुपसर्गोऽन्तर्भूतक्रियावचनो द्रष्टव्यः, उदितमित्यर्थः । वयं दा[ तारः ] तमसः अन्धकारस्य परि वर्जनार्थः । एतदुक्तं भवति—तमोपनयनार्थं बहुलतमःपङ्कं विदार्य पद्मामिवोत्थित-मित्यर्थः । ज्योतिः द्युतेरादिवर्णव्यापत्त्या क्तिन्प्रत्यान्तस्य ज्योतिश्शब्दो-निरुक्तः[3] । ज्योतिः दीप्तिः मण्डलं प्रत्यक्षगोचरं पश्यन्तः प्रणमन्तः परिदृढ-भक्तिपुरःसरमाराधयन्त इत्यर्थः । उत्तरम् उत्तरमुत्तारणहेतुं प्राणिनां सुप्तानां मृतकल्पानाम् । एकवाक्यता संपादनार्थं यत्तच्छब्दावध्याहार्यौ । यदेवंविधं मण्डलं कर्ममलकरूपं तत्रस्थं देवम् दानादिगुणयुक्तमागमगम्यं निर्वाणं देवत्रा देवन्तं देवानामपि त्रातरं निरतिशयसामर्थ्ययोगेन सूर्यम् सर्तारमन्तरिक्षे सर्वदा धारयितारं वा प्राणिनां प्राणरूपत्वात् । तथा च—आदित्यो [ ह ] वै बाह्यः प्राणः[4] इत्युपनिषत्सु गीयते । अगन्म गतवन्तः

(१) अ० ६।१।७०॥ (२) तै० सं ४।१।७॥ पाठभेदेन ऋ० १।५०।१०॥

(३) अत्र निरुक्तम्—'अथाप्यादिविपर्ययो भवति । ज्योतिः, घनः, बिन्दुः वाट्य इति'। २।१॥ अत्र स्कन्दस्वामी निर्दिष्टः पाठः—"अथाप्यादिव्यापत्तिर्भवति········" इत्यादिः युक्तश्चायमेव पाठः उत्तरत्र "अथाप्यन्तव्यापत्तिर्भवति" इत्यत्र व्यापत्तिशब्दस्य सर्वग्रन्थे-षूपलम्भात्, निरुक्तसमुच्चकारस्याप्यत्र 'द्युतेरादिवर्णव्यापत्त्या······' इति व्यापत्तिशब्द-स्यैव प्रयोगाच्च ॥ यद्यपि दुर्गटीकायां प्रतीकग्रहणे 'विपर्यय' शब्द एवोपलभ्यते । परं न स दुर्गस्वीकृतः पाठ इति प्रतीयते । यतो हि तद्व्याख्याने 'द्युत दीप्तौ तस्यादिव्या-पत्या ज्योतिः' इति व्यापत्तिशब्द एव पठ्यते ॥

वैयाकरणास्तु 'द्युतेरिसिन्नादेश्च जः' [ पं० उणा० २।११० ] इत्येवं विदधति ॥

(४) प्रश्नो० ३।८॥

प्रायेण च गमिष्याम इत्यभिप्रायः। ज्योतिः ज्योतिर्मयं [ उत्तमम् ] उत्कृष्टं परं पुरुषम्। एतदुक्तं भवति—अनेकजन्माभ्यासबलेन सर्वोपनिषत्सु गीयमानं प्रत्यक्षपरोक्षरूपं भगवन्तमादित्यं वेदय[1] सुखिनो भविष्याम इति ॥

---

उदु॒ त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तवः॑ ।
दृ॒शे विश्वा॑य॒ सूर्य॑म्[2] ॥३५॥

प्रस्कण्वस्यार्षम्। उद् इत्ययमुपसर्गो वहन्तीत्याख्यातेन संबध्यते। [उ] उकारः पदपूरणः, विग्रहादीनामर्थानामसम्भवात्। त्यम् तच्छब्दसमानार्थस्त्यच्छब्दः। त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यं मुनिजनविद्याधरादयो नमन्ति तमिति सम्बन्धः। जातवेदसम् जाते भूतजाते विद्यतेऽस्तीति जातवेदा आत्मरूपत्वात्। तथा च श्रूयते—'सूर्य आत्मा जगतस्तस्थुषश्च'[3]। जातवेदसं सर्वप्राणिहृदयकोशगुहाशयं देवम् दानादिगुणयुक्तं वहन्ति उदोऽत्र सम्बन्धः उद्वहन्ति उद्गमयन्ति व्यापारयन्ति इत्यर्थः। केतवः रश्मयः सहस्रसंख्याताः[4]। अथवा केतवः रश्मिना नाशयितारः कस्य ? तमसो, रक्षसश्चैनसश्च। केतवः एनं किमर्थं ? दृशे, दृशे विख्ये च[5] इति तुमर्थे निपात्यते, द्रष्टुं दर्शनाय, कस्य ? विश्वाय विश्वस्य, विश्वशब्दः सर्वपर्यायः। षष्ठ्यर्थे चतुर्थी, तथैकवचनं बहुवचनस्य स्थाने द्रष्टव्यम्, सर्वेषां भूतानामिति वाक्यशेषः।

---

(१) विनापि समासं ल्यप्, प्रत्ययान्तरत्वाद्। यथा—'संध्यावधूं गृह्य करेण भानुः' इति जाम्बवतीविजये पाणिनिः। आज्यैनाक्षिणी आज्य इत्याश्वलायनः ( द्र० 'आज्येनाक्षिणी आज्य—इत्यसमासेऽपि ल्यप् प्रयुक्तः' तन्त्रवा० १।३।८ पृष्ठ २५९ पूना )। अर्च्य देवान् गतः' इति काशिकाकारोद्धृतः पाठः (७।१।३८)।

(२) तै० सं० १।२।८॥ ऋ० १।५०।१॥ (३) ऋ० १।११५।१॥

(४) द० ऋ० ६।४७।१८; जै० उ० ब्रा० १।४४।५ ॥ (५) अ० ३।४।११॥

तथाहि यास्कस्य निरुक्तभाष्यकारस्य वचनम्—सर्वेषां भूतानां दर्शनार्थाय[1] इति। सूर्यम् सरणधर्माणमादित्यं, स हि सर्वदा सरत्येव न क्वचिदवतिष्ठते भूतजातानां विभूत्यै ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च[2] ॥३६॥

कुत्सस्यार्षम्। चित्रम् चित्ररूपं देवानाम् अग्न्यादीनां दीप्तिमतां मध्ये। तथा ह्युक्तम्—"आदित्यस्तेजसां दिवि"[3] इति। अथवा चायनीयं देवानां पूजनीयम् उदगात् उद्गमत्, तदिदं ज्योतिः आदित्याख्यं अनीकम् अनीकशब्देन सेनाभिधीयते सेनारूपं प्रतिबन्धिभूतानां देवद्विषामपनेतॄणाम्। अथवा अनीकमनन्तप्राणरूपमित्यर्थः। चक्षुः चक्षुश्शब्दः चष्टेः पश्यति कर्मणः, चक्षुः कस्य? मित्रस्य वरुणस्याग्नेः च। तथा च श्रूयते—"असौ वादित्यो देवानां चक्षुः"[4] इति। सर्वेषां देवानां चक्षुः किं पुनर्मनुष्यादीनाम्। उदयनान्तरमेव आप्राः प्रा पूरणे आभिमुख्येन पूरयतीति, किं? द्यावापृथिवी दिवं [ पृथिवीं ] च अन्तरिक्षं च। केन? महत्त्वेन स्वेन महत्त्वेन तत्क्षणमेव त्रैलोक्यं प्रकाशयतीत्यर्थः। अन्तर्हितप्रकाशनं हि भगवत आदित्य[ स्य ] कर्म। तथा चोक्तं भाष्यकारेण—"यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत्"[5] इति। किं च सूर्य आत्मा अत्तेर्धातोरात्मशब्दो निरुक्तः[6]। अत्ति ह्यसौ सर्वाणि भूतानि अनुप्रविश्य चतुर्विधमाहारम्। [ तथा ] च गीयते—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥[7]

(१) निरु० १२।१५॥ (२) तै० सं० १।४।४३॥ ऋ० १।११५।१॥
(३) मनु० ८।८२ इतोग्रे प्रक्षिप्ते श्लोके॥ (४) अनुपलब्धमूलमिदम्॥ (५) निरु० ७।११॥
(६) अत्तेर्नु क्वचिदात्मशब्दो निरुक्तो यास्केन। द्र० निरु० ३।१५॥ (७) गीता १५।१४॥

इति। कस्य? जगतः जङ्गमस्य मनुष्यादेः तस्थुषश्च स्थावरस्य वृक्षादेः। द्विविधं खलु भूतजातमिहावस्थितं जङ्गमं च स्थावरं च। तस्य सर्वस्य [अ]यमेवात्मरूपेण स्थित इति॥

तच्चक्षुर्देवहितं शुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतम्[1] ॥ ३७ ॥

वसिष्ठस्यार्षम्। आदित्यो[2] देवता। [तत्] तच्छब्देन जगद्व्यापारकारणमादित्याख्यं ज्योतिरभिधीयतेऽविनाशि वेदविद्भिरभिवाद्यमानं तत् चक्षुः चष्टे इति पश्यतिकर्मा, पश्यति ह्यसावध्यक्षभूतो भगवानादित्यः प्राणिनां चेष्टितं शुभमशुभं वा। अथवा चक्षुर्दर्शनं, कस्य? देवानाम्। तथा च श्रूयते—"असौ वादित्यो देवानां चक्षुः"[3] इति। देवहितम् देवानां दानादिगुणयुक्तानामग्न्यादीनां हितम्, आदित्यो ह्युदयास्तमयाभ्यामग्निहोत्रहविःप्रदानार्थमहोरात्रविभागं सम्पादयति, तस्माद्धितमुच्यते। देवैर्वा निहितं लोकरक्षणार्थं देवहितम्। अथवा देवादयो दानशीलानुष्ठायिनः तेषामात्मसायुज्यसंपादने हितं श्रेयस्करम्, तत्र प्रविष्टानां नित्यानन्दत्वात्। "पुरस्तात्" इति शाखान्तरम्।[4] पूर्वस्यां दिशि शुक्रम्, "शुक्रं शोचतेर्दीप्तिकर्मणः"[5]। शुग् दीप्तिः, सा यस्यास्तीति मत्वर्थीयो रप्रत्ययः, मधुर इति यथा। शुक्रमतितेजस्वितया विराजमानमित्यर्थः। उच्चरत् उद्यन् उन्मुखमयूखं ज्योतिरादित्याख्यं पश्येम। कियन्तं कालं? शरदः शतम् शरच्छब्दः संवत्सरपर्यायः, संवत्सरशतम्। अथवा शरच्छब्देन ऋतुरभिधीयते न संवत्सरः। शरदि हि व्याधिबहुलत्वा[त्त]द्दुर्दर्शमिति विशेषेण प्रार्थ्यते। शृणातीति शरत् [तथा च] श्रूयते—"शरद् वाऽस्यां

(१) ऋ० ७।६६।१६
(२) कात्यायनस्तु सूर्यदेवतामाह—'......तिस्रः सौर्यः' इति [ऋ० सर्वा० ७।६६]॥
(३) अनुपलब्धमूलमिदम्॥ (४) माध्य० यजुः० ३६।२४॥
(५) निरु० ८।१०। तत्र 'ज्वलतिकर्मणः' इति पाठः॥

कालः सा ते या वा एष हिनस्ति यꣳहिनस्ति"[1] । जीवेम शरदः शतम् जीवन्नेव पश्यतीति पौनरुक्त्यप्रसंगो जातः । अतस्तत्परिहारार्थमेवं योजनीयम्—पश्यतिक्रियया दर्शनमात्रमभिहितं, जीवेम इत्यनेन सर्वसम्पद्गतं जीवनमाशास्यते, न प्राणधारणमात्रम् । एतदुक्तं भवति—देवमनुष्यादिसुखसाधनभूतमादित्याख्यं ज्योतिः पश्यन्तः सर्वाभिः संपद्भिः संगत्य सुखं जीवेमेति मन्त्रशेषो व्याख्यातः ॥

---

इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृळय ।
त्वाम॑व॒स्युरा च॑के ॥ ३८ ॥[2]

शुनःशेपो यूपे नियुक्तो वरुणं प्रार्थयते[3] । प्रत्यक्षकृतोऽयं मन्त्रः । इमम् प्रक्रान्तं मे मम मत्संबन्धिनं मत्प्रयुक्तमित्यर्थः । वरुण परितस्तेजसा सर्वस्य जगतः प्रकाशयितः श्रुधि शृणु हवम् स्तोममृङ्मयमेकत्रिंशत्संख्याप्रयुक्तम् । तथा हि हरिश्चन्द्रस्याख्याने श्रूयते—स वरुणं तुष्टावात उत्तराभिरेकत्रिंशता[4] इति । श्रुत्वा च स्तोमं मतोनुग्राहकतया अद्य अस्मिन्नहनि च चशब्दः समुच्चयार्थः श्वश्च, प्रदर्शनार्थमिदं सर्वेष्वप्यहःसु इत्यर्थः । मृळय, मृड सुखने, सुखय सुखं कुरु । त्वाम् निग्रहानुग्रहसमर्थम् अवस्युः अवतेरक्षणार्थस्य वा तर्पणार्थस्य वाऽसुन्प्रत्ययान्तस्य 'अवः' इति रूपम्, 'सुप आत्मनः'[5] इच्छतीति अवस्युः क्यच्प्रत्ययः, "क्याच्छन्दसि[6]" इत्युप्रत्ययः, अवस्युः पालनकामः, तर्पणकामो वा । अहमासन्नमृत्युरिवास्थितः आचके याच्ञाकर्मोऽयम्, आभिमुख्येन याचे । याचेर्द्विकर्मकत्वात्[7]

---

(१) अनुपलब्धमूलमिदम् । अत्र पाठोऽत्यन्तं भ्रष्टः । (२) ऋ० १।२५।१९ ॥ तै० सं० २।१।११॥ (३) ऐ० ब्रा० ७।१६॥

(४) ऐ० ब्रा० ७ । १६ ॥ तत्र 'वरुणं राजानमुपससारातः' इति पाठः ॥

(५) अ० ३ । १ । ८ ॥ (६) अ० ३ । २ । १७० ॥

(७) 'दुहियाचिरुधिपृच्छि' इत्यादिषु [ महाभाष्य अ० । १ । ४ । ५१ ] परिगणितत्वात् ॥

प्रकरणान्वितं कर्मपदमध्याहार्यम् । आयुष्कामो हि शुनःशेपः प्रजापतिप्रमुखान् देवांस्तुष्टाव । अत आयुर्याचे त्वामित्यर्थः । यतस्त्वं पापकर्मणो निग्रहे युक्तः । तथाहि श्रूयते—अनृतं वै क्रियमाणं वरुणोऽमुं गृह्णाति[1] इति । तस्मादिह दुश्चरिताद्वा पूर्वजन्मदुश्चरिताद्वाऽहमिमामवस्थां प्राप्तो यथाऽहं क्षपितकल्मषो दीर्घायुश्च स्याम्, तथा त्वया सम्पादनीय इति ॥

---

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः[2] ॥३९॥

शुनःशेपो वरुणमाह । [ तत् ] तच्छब्देन बुद्धौ विपरिवर्तमानमभिलषितमायुरभिधीयते । आयुः [ त्वा ] त्वां [ यामि ] याचे । अथवा तत्वेति तनु विस्तारे इत्यस्य क्त्वाप्रत्ययान्तस्य उदितो वा[3] इतीड्विकल्प एतद् रूपम्[4], तत्वा तनित्वा परिचर्यया याचे । परिचर्ययाऽभीष्टा देवताभिलषितमर्थं ददाति । ब्रह्मणा परिवृद्धेन एकत्रिंशत्संख्यायुक्तेन स्तोत्रेण[5]

(१) अनुपलब्धमूलमिदम् ॥ (२) ऋ० १ । २४ । ११ ॥ तै० सं० २ । १ । ११
(३) अ० ७ । २ । ५६ ॥
(४) तुलनीया स्कन्दनिरुक्तटीका—'तत एतदन्यथा व्याख्यायते । तत्वा......तनित्वा गच्छामीत्यर्थः.........तत्वा इत्येतत् तनु विस्तारे इत्यस्य क्त्वाप्रत्यये रूपम्.........' इत्यादि । निरुक्त २ । १ ॥ भा० २ पृ० ११ ॥ निरुक्तश्लोकवार्तिककारोऽप्येवमेवाह ।
एवं व्याख्याने पदपाठे भेदो भवति । 'तत् । त्वा' इति द्वे पदे चकार शाकल्यः । क्त्वाप्रत्यये 'तत्वा' इत्येकं पदम् । अपरं च यदा द्वे पदे तदा संहितायां 'त्त्वा' द्वे तकारे भवतः । एकपदे 'अनचि च' [ अ० ८ । ४ । ४७ ] इति द्विर्वचनं 'सर्वत्र शाकल्यस्य' [ अ० ८ । ४ । ५१ ] इति प्रतिषिध्यते शाकल्यमते । तथा सति कदाचिदेकतकारः स्यात्, कदाचिद् द्वितकार इति ।
अपि च स्वरे दोषो भवति—'तत्वा' इत्येकपदे सतिशिष्टनियमेन 'क्त्वा' प्रत्ययस्य स्वरेऽन्तोदात्तत्वं प्राप्नोति । इष्यते चाद्युदात्तत्वम्, सर्वत्र संहितासु तथैवोपलम्भात् । द्विपदयोस्तु 'तत्' इति प्रातिपदिकस्वरेणोदात्तः । ततः 'त्वा' इति 'त्वामौ द्वितीयायाः' इत्यादिनाऽनुदात्तः । तस्य संहितायां स्वरितत्वम् । एवं च क्त्वाऽपव्याख्यानमेतन्निरुक्तसमुच्चयकारस्येति स्पष्टम् ॥ (५) पूर्वमन्त्रव्याख्याने द्रष्टव्यम् ॥
(६) 'प्रगीतमन्त्रसाध्य गुणिनिष्ठगुणाभिधानं स्तोत्रम्' । 'अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्' इति मीमांसकाः । अत्र तु स्तोत्रपदं स्तुतिमात्रपरम् ॥

वन्दमानः स्तुवन् स्तुतिप्रवृत्तत्वाद् याच्ञायां तदाशास्ते कामयते । अयमपि यजमानः हरिश्चन्द्राख्यो महोदरव्याधिना ग्रस्तः । तथा हि हरिश्चन्द्रोपाख्याने श्रूयते—'अथ हैक्ष्वाकं वरुणो जग्राह तस्य महोदरं जज्ञे'[1] इति । हविर्भिः अस्म दिभिः (?, अन्नादिभिः) । अतो भगवन् अहेळमानः हेळतिः क्रुध्यतिकर्मा, अक्रुध्यन्, कुतः ? सर्वो हि [लो]को बहुभिर्याच्यमानः क्रुध्यति । हे वरुण इह इति कालः प्रतिनिर्दिश्यते, एतस्मिन् काले बोधि बुध्यस्व विज्ञापनमिति शेषः । बुध्वा च भक्तवत्सलतया उरु शंस उर्विति बहुनाम[2] शंस स्तुतौ बहुस्तुतः, बहुभिर्यजमानैः स्तूयमानः । किञ्चिदर्थं कामयमान एव स्तौति । मा मेति प्रतिषेधार्थो निपातः[3] प्रमोषीरित्याख्यातेन सम्बध्यते । [नः] 'अस्मदो द्वयोश्च'[4] इति द्वयोर्बहुवचनम्, आवयोः, मम हरिश्चन्द्रस्य च आयुः जीवितं मा प्रमोषीः मापहार्षीः । त्वत्प्रसादादहमपि हरिश्चन्द्रोऽपि नीरोगौ दीर्घायुषौ भूयास्वेत्यभिप्रायः ॥

---

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।
मिनीमसि द्यविद्यवि[5] ॥४०॥

शुनःशेपस्यैव वाक्यम् । [यत्] यच्छब्दो यदि इत्यस्यार्थे द्रष्टव्यः । चित् हि द्वावपि निपातावनेकार्थौ, चिदित्येषो निपातोऽनेककर्मा[6] हीत्येषोऽनेककर्मा[7] इति भाष्यकारवचनात् । तथापीह पूजादीनामविद्यमानत्वात् पदपूरणौ अनर्थकावित्यर्थः । ते तव व्रतम् इति सम्बन्धः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्[8] प्रविश पिण्डीन् भक्षय गृहम्[9] इति यथा । विशः,

---

(१) ऐ० ब्रा० ७ । १५ ॥ तत्र 'तस्योदरं जज्ञे' इति पाठः ॥
(२) निघ० ३ । १ ॥ (३) अत्र निरुक्तम्—"मेति प्रतिषेधे" ॥ निरु० १ । ५ ॥
(४) अ० १ । २ । ५९ ॥ (५) ऋ० १ । २५ । १ ॥ तै० सं० ३ । ४ । ११ ॥
(६) निरु० १।४। तत्र 'निपातः' इति पदं नास्ति ॥ (७) निरु० १।५॥
(८) न्या० भा० १।२।१९॥ (९) पूर्वोद्धृतस्य नियमस्योदाहरणमिदम् ।

विश इति मनुष्यनाम[१] विशन्ति हि ते प्राप्नुवन्त्यभिलषितमर्थं यत्नेन। यथा प्राकृता युक्तायुक्तविवेकशून्या हृदयविहितं कर्म प्रलुम्पन्ति तथा वयमपीति सम्बन्धः। [प्र] प्रशब्दो मिनीमसि इत्यनेन संबध्यते। हे देव दानादिगुणयुक्त वरुण [व्रतम्] व्रतमिति कर्मनाम[२] कर्म परिचर्या दृष्टादृष्टसुखसाधनं मिनीमसि इदन्तो मसि[३] इति मसश्छन्दसि विषये इकारान्तत्वमिष्यते। मिनीमः मि हिंसायाम् इत्यस्य भूतकाले वर्तमान-कालश्छान्दसत्वाद्विधीयते बहु[ल]वचनाद्, अवधिष्म हतवन्तो वय-मित्यर्थः। द्यविद्यवि इत्यह्नो नामधेयम्,[४] द्योतयतीति द्युः, अहन्यहनि अतीतेषु कालेष्वित्यर्थः। एतदुक्तं भवति—शब्दादिविषये संसक्तहृदयाः सन्तो वयं त्वत्परिचर्यादिकर्म लुप्तवन्तः, तस्मादपचारात् मा हिंसीरित्यर्थः॥

---

यत् किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि।
अचित्ती यत्तव धर्मा युयोपिम
मा नस्तस्मादेनसो देव रीरिषः[५] ॥४१॥

वसिष्ठो वरुणमाह। यत् किं च चशब्दश्चिच्छब्दपर्यायः, कीदृशं प्राण-घातकहेतुभूतमित्यर्थः। हे वरुण दैव्ये समूहार्थे तद्धितः,[६] देवसमूहे देवेष्वित्यर्थः [जने] जनेषु च अभिद्रोहम् अभिद्रोहशब्देनापचार उच्यते, अभिद्रोहं वावदूकं मनुष्या वयं चरामसि, किं च अचित्ती धी[ती] मती सुष्टुती[७] इत्यादिवत्तृतीयायाः पूर्वसवर्णः। यत्तव धर्मा धर्मशब्दः कर्मवचनः[८]

---

(१) निघ० २।३॥ (२) निरु० २।१३॥ (३) अ० ७।१।४६॥
(४) निघ० १।९॥ (५) ऋ० ७।८९।५॥ तै० सं० ३।४।११॥
(६) देवाद् यञञौ [अ० ४।१।८५ वा०] इत्यनेन प्राग्दीव्यतीयेष्वर्थेषु यञ्॥
(७) तुलना—काशिका० ७।१।३९॥
(८) नपुंसकलिङ्ग इति शेषः। द्र० हर्षलिङ्गानुशासनटीका—'क्रतौ धर्मक्रतौ तत्साधने वर्तमानं धर्म नपुंसकम्। यथा—तानि धर्माणि प्रथमान्यासन् इति (पृष्ठ ३४)। सुबोधिन्याममर-व्याख्यायाम्—'नपुंसकलिङ्गो धर्मशब्दः कर्मवचनः, पुल्लिंगस्त्वदृष्टवचनः' इति।

"तानि धर्माणि प्रथमान्यासन्"[1] इति यथा । कर्म परिचर्यादिरूपं युयोपिम नश्यतिकर्माऽयं, लुप्तवन्तो वयमित्यर्थः । [ मा ] मेति प्रतिषेधार्थो निपातो रीरिष इत्याख्यातेन संबध्यते । नः अस्मान् तस्मात् हेताविय पञ्चमी, तस्मादेनसो हेतोः । एनसः एतेरसुन्प्रत्ययान्तस्यैतद् रूपं नकारश्चोपजनः,[2] पापपर्यायः । एति हि तत् कर्तारम् । तथा हि श्रूयते—तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च[3] इति । हे देव दानादि-गुणयुक्त मा रीरिषः रिषतिर्हिंसार्थः, मा हिंसीः । एतदुक्तं भवति—ज्ञानाज्ञानकल्माषापादितपापबन्धनापनयनपुरःसरं सर्वसंपत्सुखसाधन-भूतमायुरपरिमितं भक्तवत्सल देहीत्यभिप्रायः ॥

कितवासो यद् रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता विष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः[4] ॥४२॥

अत्रेरार्षम् । वरुणोऽभिधीयते । वरुणो मध्यमस्थानो[5] द्युस्थान-श्चास्ति[6] । उभावपि स्तोतॄणामभिलषितार्थप्रदाने समर्थौ भवतः, अणि-मादिगुणयोगादैश्वर्यस्य च विद्यमानत्वात् । तथा चोक्तं भाष्यकारेण—सर्वासु देवतास्वैश्वर्यं विद्यते[7] इति । तथा भगवानादित्यो भक्तेष्वतिवत्सलः । [ कितवासः ] किं तवास्तीति वर्तमानाः [ यद् ] यं मिथ्यारूपं रिरिपुः रपतेश्शब्दार्थस्यैतद् रूपं छान्दसम् । रेपिम उक्तवन्तो वयमित्यर्थः । [ न ] नशब्दोऽयमुपमानार्थोऽनर्थको न[8], दीवि दीव्यतेरेतद् रूपम्, दिवि देवने आस्थान ( आस्फार ) प्रदेशे निर्धनाः सन्तो भृत्यानामुप-

---

(१) यजुः० ३१।१६॥ (२) द्रष्टव्यम्–'इण आगसि' इत्युणादिसूत्रम् (४।१९८) ।

(३) बृ० उ० ४।४।२॥ निरु० १४।७॥ (४) ऋ० ५।८५।८॥ तै० सं० ३।४।११॥

(५) निघ० ५।४॥ (६) निघ० ५।६॥

(७) निरु० ८।३॥ (८) 'न' स्थाने 'वा' पदं साधु स्यात् । अयं भावः—नकारोऽत्र मन्त्र उपमार्थो वा द्रष्टव्योऽनर्थको वा । उपमार्थेऽपि पुरस्तादुपचारोऽपि सामर्थ्याज्ज्ञेयः ।

जीवनार्थं भर्तव्या हि भृत्याः सर्वथा[१] इति मन्वादय आहुः। यद् वा यच्चेति निपातः पादपूरणे। [सत्यम्] सत्यमेव यल्लोकसंयानं (?) [उत] उतशब्दोऽप्यर्थे निपातानामनेकार्थत्वाद् यच्छब्दस्यार्थे (?) सत्यमपि च यन्न विद्मः न जानीमः, रुवेदाऽसत्यवादिनो भवामः। अनृतवादिनो [हि] मनुष्याः। तथा हि श्रूयते—सत्यसंहिता वै देवाः, अनृतसंहिता मनुष्याः[२] इति। अनृतवादिने ह्यनेकं पापं श्रूयते—

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥[३]

इति। अतो भगवन् सर्वा ता उभयत्र शेर्लोपः, सर्वाणि तानि पापानि विष्यस्यतिरयमुपसृष्टो [विमोचने][४], विमोचय अवस्य इत्यर्थः। शिथिरा शिथिराणि [शिथिलानि] रश्रुतेर्लश्रुतिर्भवति[५] विशिष्टसम्बन्धी [नि] बन्धनानि कुर्विति शेषः [इव] इवशब्दोऽनर्थकः। अथ हे देव दानादिगुणयुक्त अध अनन्तरं त्वया क्षालितसर्वकल्मषाः सन्तो वयं ते तव स्याम भवेम। हे वरुण प्रियासः स्तुत्यस्तोतृत्वलक्षणे सख्ये वर्तमाना इति वाक्यशेषः। मरुतां[६] हि सख्यं महतीं विभूतिमाधत्त इत्यभिप्रायः॥

---

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन।
महे रणाय चक्षसे[७] ॥४३॥

त्रिशिरसः सिन्धुद्वीपस्य वैतत्सूक्तम्। मार्जारनकुलादीनां पृथग्घनन-प्रायश्चित्तं विहितम्—सूक्तं वाब्दैवतं जपेत्[८] इति, नित्यकर्मणि च विधीयते। आपो देवता। आपश्च देवताकाण्डे पृथिवीस्थानदेवतासु[९] समाम्नायते।

यतो हि पुरस्तादुपचारः प्रतिषेधार्थीयः, उपरिष्टादुपचारश्चोपमार्थीयो भवति। द्र० निरु० १।४॥ (१) अनुपलब्धमूलमिदम्॥ (२) ऐ० ब्रा० १।६॥
(३) म० भा० उद्योग० ३५।३३॥
(४) द्र० स्यतिरुपसृष्टो विमोचने। निरु० १।१७॥ (५) महाभाष्य 'एओङ्' सूत्रे॥
(६) एतेन 'वरुणशब्देनात्र मध्यमस्थानीयत्वात् मरुतो गृह्यन्ते' इति स्पष्टम्॥ पक्षान्तरे सुस्थानत्वेन आदित्य उच्यते।
(७) ऋ० १०।९।१॥ (८) मनु ११।१३२॥ (९) निघं० ५।३५॥

आपः प्रत्यक्षरूपत्वात् मन्त्रस्य संबोधनावगत्यर्थौ हे शब्दपूर्वं (? शब्दः पूर्वमध्याहार्यः), नित्यबहुवचनमेतत्। नाम्नामाख्यातजत्वप्रतिज्ञानात्[1] क्रियायोगमङ्गीकृत्य सर्वं निर्वक्तव्यम्। आपः आप्नोतेः, ताभिर्हि विश्वं व्याप्तम्। तथा चाथर्ववेदे श्रूयते—सर्वं वा इदमम्मयम्[2] इति। अपामधिष्ठात्र्यो देवता आपद्यन्ते—हे आपः। हि शब्दप्रभृतीनामर्थानामविद्यमानत्वात् पादपूरणार्थत्वं प्रतिपाद्यते। स्थ भवथ। कीदृश्यः? मयोभुवः, मय इति सुखनाम[3] माद्यतेरन्तर्णीतणिजर्थस्यासुन्प्रत्ययान्तस्य दकारस्य यकारव्यापत्त्या चैतद् रूपम्। मादयतीति मयः, अन्तर्णीतण्यर्थोऽयं भवति; मयस्य सुखस्य भावयित्र्यः, प्राणिनां सुखस्य कर्त्र्यं इत्यर्थः। तथा च श्रूयते—यावन्तो अप्सु प्राणिनाम्[4] इति। [ताः] तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः। या एवंविधा जगदुपकारिण्यस्ताः यूयमिति वाक्यशेषः। कुत एतल्लभ्यते? प्रत्यक्षकृतत्वान्मन्त्रस्य नः अस्मान् ऊर्जे उर्जशब्दोऽन्नवचनः[5]। ऊर्जेऽन्नाय शालिगोधूमरूपाय दधातन तनप्रत्ययश्छान्दसोऽनर्थकः। कुतः? तन इत्यर्थका उपजना भवन्ति[6] इति भाष्यकारवचनात्। धत्तेत्यर्थः, बह्वन्नमस्माकं दत्तेत्यर्थः। बह्वन्नमूलत्वात् सर्वसम्पदाम्, पुरुषेण [तत्] साधनीयम्। तथा च श्रूयते—तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्[7] इति। महे महते रणाय रमधातोरेतद् रूपं, रमणीयं, चक्षसे चष्टेः पश्यतिकर्मणोऽसुन्प्रत्ययान्तस्यैतद् रूपं, ककारश्चोपजनः[8]। महद् रमणीयं भगवदादित्यं दर्शनाय चक्षुर्ध-

---

(१) निरु० १।१२॥ (२) अनुपलब्धमूलमिदम्॥ (३) निघ० ३।६॥

(४) ऐ० ब्रा० ७।१३ (५) निघ० २।७॥

(६) निरु० ४।७॥ नैतस्यायं भावो यत् 'तन' सर्वोऽपि प्रत्ययोऽनर्थकः। अपि त्वस्यायं भावः—'त' प्रत्यय एव नकारस्योपजनोऽनर्थक इति। यावान् मध्यमपुरुषबहुवचनरूपस्य 'त', प्रत्ययस्यार्थस्तावानेव 'तन' इत्यस्य। अतो वररुचिवचनं चिन्त्यम्, यद्वा 'तनप्रत्यये नकारोपजनश्छान्दसोऽनर्थकः' इति पाठो द्रष्टव्यः।

(७) तै० उ० ३।१०॥

(८) 'तुमर्थे सेसेन्' इति सूत्रेण चक्षिङोऽसेन्प्रत्ययेऽपि सिद्ध्यति। यत्तु वररुचिना चष्टेरसुनि

त्तेत्यनुषङ्गः । एतदुक्तं भवति—लोकमातॄणां युष्माकं प्रसादेनाक्षयमन्न-मभिलषितं दर्शनमस्तु इत्याशास्यते ॥

---

**यो वः शिवतमो रसस्तस्य भाजयतेह नः ।**
**उशतीरिव मातरः[1] ॥४४॥**

[ यो वः ] युष्माकं संबन्धीति शेषः । शिवतमः शिव इति सुखनाम[2] शिम्यतेस्तर्पणार्थस्यान्तुव्याप्तिर्वकारेण[3] गुणाभावश्च । सुखातिशयहेतुः रसः·········रसेन भूयमास्वाद्य तस्य षष्ठीश्रुतेरेकदेशमिति वाक्यशेषः, द्वितीयार्थे वा षष्ठी वतावा ( ?; तं वा ) रसं भाजयत भज सेवायाम् सेवय तवायमस्तीत्यर्थः । इह लोके नः अस्मान् सद्देन्द्रियप्रीतिसाधनभूतं युष्मदीयं रसं मध्यमं दत्तेत्यर्थः । किमिव उशतीरिव द्वितीयाबहुवचनमेतत् प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् उशत्य इव मातरः यथा कामयमाना स्नेहार्द्रचेतसो मातरो दृष्टादृष्टोपकारिण्यः सत्यो जनायारोग्यादि [ सा ]-धनेन क्षीरादिना रसेन भाजयन्ति तथा यूयमपीति वाक्यशेषः ॥

---

**तस्मा अरंङ्गमाम वो यस्य क्षयाय जिन्वथ ।**
**आपो जनयथा च नः[4] ॥४५॥**

तस्मै, यथार्थं विभक्तीः सन्नमयेत्[5] इति भाष्यकारवचनाद् विभक्तिव्यत्ययेन भवितव्यम, चतुर्थ्यैकवचनमपि द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । तच्छ-

ककारोपजन उक्तः स चिन्त्यः । यतः 'चष्टेः' इति चक्षिङरितपि रूपम् ? तत्र धातौ कुप् संयोगस्य विद्यमानत्वात् ।

(१) ऋ० १०।९।२॥ (२) निघ० ३।६॥
(३) शिम धातुर्दिवादावन्यत्र च न क्वचिद् धातुपाठे पठ्यते ।
(४) ऋ० १०।९।३॥ (५) निरु० २।१॥

०द्देन पूर्वस्मिन् मन्त्रे प्रकृतस्य [ र ]सस्य प्रति निर्देशः। तं रसं [ अरम् ] अरंशब्दः कपिलकादिषु[1] पठ्यते, तस्माद्रेफस्य लापत्त्या भवितव्यम्, अलं पर्याप्तं सकलमित्यर्थः। गमाम अगच्छाम प्राप्नुयाम, वः युष्माकं यस्य रसस्य क्षयाय क्षयो निवासः,[2] निवासाय जिन्वथ जिन्वतिः प्रीणातिकर्मा[3], प्रीणयथ [ र ]समतिशयं प्रीतिसाधनभूतं धारयथेति संबन्धः। हे आपः जनयथा च नः अस्मान् प्रकाशयत इत्यर्थः। अथवा जनयथ पुत्रपौत्रादिसहितानस्मान् संपादयत। अपत्यमूलं हि मर्त्यस्यामृतत्वम्। तथा हि श्रूयते—"प्रजाभिरग्ने अमृतत्वमश्याम"[4] इति॥

---

शंन्नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑।
शं योर॒भि स्र॑वन्तु नः[5] ॥४६॥

[ शम् ] शमिति सुखनाम[6]। सुखरूपाः सुखरूपहेतुभूताः नः अस्माकं देवीः प्रथमाबहुवचनस्य स्थाने द्वितीयाबहुवचनमेतत्,[7] देव्यः देवतास्वरूपत्वात् स्तोतॄणामभिलषितार्थप्रदायिन्यः। अथवा देव्य इति वरुणस्य राज्ञः [ पत्न्यः ]। तथा च श्रूयते—आपो वै वरुणस्य पत्नय आसन्[8] इति। अभिष्टये अभिपूर्वाद् इच्छतेः क्तिन्प्रत्ययान्तस्यैतद् रूपम्, अभिलषिताय आपो भवन्तु पीतये पानाय सोमपानाय इत्यभिप्रायः। अभिलषितं हि सोमपानं ब्राह्मणस्य ऋणसंबन्धित्वात्। तथा च श्रूयते—"यज्ञेन देवेभ्यः

---

(१) "संज्ञाछन्दसोर्वा कपिलकादीनाम्" [ अ० ८।२।१८॥ वा० ]॥

(२) "क्षयो निवासे" [ अ० ६।१।२०१ ] इत्यादिना निवासार्थे क्षयशब्दस्याद्युदात्तत्वविधानात्॥ (३) "हिवि दिवि धिवि जिवि प्रीणनार्थाः" इति भ्वादौ पठ्यते॥

(४) ऋ० ५।४।१०॥ (५) ऋ० १०।९।४॥

(६) वाच्छन्दसि ( ६।१।१०७ ) इति नियमेन प्रथमाबहुवचनेऽपि छान्दसं रूपं भवति। तेन विभक्तिव्यत्ययो न कर्तव्यो भवति। (७) निघ० ३।६॥

(८) द्र० आपो वरुणस्य पत्नय आसन्। तै० ब्रा० १।१।३।८॥

प्रजया पितृभ्यः[१]" इति। शं योः पदद्वयमेतत्[२], शंशब्देन शमनमुच्यते। कस्य? रोगाणाम्। योरिति यु मिश्रणे इत्यस्य विनाशार्थस्यान्तर्णीतण्यर्थस्य द्वितीयैकवचनस्य स्थाने षष्ठ्येकवचनम् पञ्चम्येकवचनमित्यवगमः। नन्वस्ति विनाशार्थस्य प्रयोगः? अस्तीति ब्रूमः—युतमस्य धनं युता वा[३] इति, नष्टमित्यर्थः। कस्य यावनम्? भयानाम्। तथा च निरुक्तभाष्यकार आह—शमनं च रोगणां यावनं च भयानाम्[४] इति। [अभि] अभिशब्दः कर्मप्रवचनीयः प्रतिना समानार्थो द्रष्टव्यः। प्रति रोगाणां शमनं, प्रति भयानां यावनम्। स्रवन्तु स्रवतिर्गतिकर्मा गच्छन्तु नः अस्माकम्। रोगोपशमनं भयापनयनं चास्माकमापः कुर्वन्तु इत्याशास्यते॥

---

ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम्।
अपो याचामि भेषजम्[५] ॥४७॥ अथर्व-१-५-४

[ईशानाः ईश्वराः। वार्याणाम्] वृणोतेरेतद् रूपम्, वरणीयानां ज्योतिष्टोमादीनां, तत्साध्यत्वात्तेषाम्। अथवा वरणीयानां मणिमुक्ताप्रवालादीनां तत्प्रभवत्वात्तेषाम्। अथवा वार्याणां वरणीयानां सर्वेषामेव लोकानामीश्वराः प्राणरूपत्वात्। प्राणा वा आपः[६] इति श्रूयते। क्षयन्तीः निवासयन्तीः, निवसनहेतुभूताः, चर्षणीनाम् चर्षणीशब्दो निरुक्ते[७] मनुष्यपर्यायः प्रदर्शनार्थः, चर्षणीप्रभृतीनां प्राणिजातानां कर्मणि षष्ठी, चर्षणिप्रभृतीन् प्राणिनो धारयन्तीत्यर्थः। तन्मूलो हि सर्वप्राणिनां निवासः जीवनं च। तथा चोक्तम्—

(१) तै० सं० ६।३।१०॥

(२) "शंयुः सुखंयुः" इत्येकपदपदरूपस्य निर्वचनम्। 'शमनं च रोगणां यावनं च भयानाम्' इति द्विपदरूपस्य। द्र० निरु० ४।२१॥ (३) अनुपलब्धमूलमिदम्॥

(४) निरु० ४।२१॥ (५) ऋ० १०।९।५॥

(६) तै० ब्रा० ३।२।५।२॥ (७) निरु० १२।२१॥ निघ० २।३॥

अद्भिः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ।
तस्मात् सर्वेषु दानेषु तोयदानं विशिष्यते ॥[1]

इति । इत्थं भूताः अपः याचामि भेषजम् संसारव्याधिनाशकरमौषधम् । द्विकर्मकत्वं याचेर्दर्शितं—पौरवं गां याचते[2] इति ॥

---

अप्सु मे सोमो अब्रवीदुन्तर्विश्वानि भेषुजा ।
अग्निं च विश्वशंभुवम्[3] ॥४८॥

अप्सु [ अप्सु ] इति सप्तमी बहुवचनं षष्ठी बहुवचनस्य स्थाने, अपां मे मम सोमः मध्यमस्थानः वृष्टिलक्षणानामुदकानां पतिः अब्रवीत् । अन्तः अन्तःशब्दो मध्यवचनः मध्ये अपामिति संबन्धः, विश्वानि सर्वाणि [ भेषजा ] भेषजानि सर्वरोगोपशमन-साधनभूतानि औषधानि । तथाप्यायुर्वेदविदो निदिग्धिकादिषु[4] दोषेषु ताः प्रयुज्यन्ते । अग्निं च वाडवम्, उदकेन्धनः सामुद्रिकाणां मध्ये स्थित इति सम्बन्धः, वैद्युतं वा मेघोदरगतानामपां, जाठरं वा प्राणाया-मधारणाविजृम्भविसृतानामपाम् । कीदृशम् ? विश्वशंभुवम् विश्वशब्दः सर्वपर्यायः शमिति सुखनाम,[5] भवतिरन्तर्णीतण्यर्थः । सर्वभूतजातस्य सुखस्य भावयितारं कर्तारमित्यर्थः । अतो भेषजमिमं याचे इति संबन्धः ॥

---

आपः पृणीत भेषजं वरूथं तन्वे३ मम ।
ज्योक् च सूर्यं दृशे[6] ॥४९॥

---

(१) अनुपलब्धमूलमिदम् ॥

(२) महाभाष्य १।४।५१ ॥

(३) ऋ० १०।९।६ ॥

(४) साम्प्रतं पाश्चात्याश्चिकित्सका अपि बहून रोगान् जलचिकित्सयाऽपहन्ति ॥

(५) निघ० ३।६॥

(६) ऋ० १०।९।७॥

हे आपः पृणीत [ प्रीङ् तर्पणे, ] तर्पयत इत्यर्थः । भेषजम् ज्वराद्यपनयनसमर्थमौषधं वरूथम् वरणीयं तन्वे शरीराय [ मम ] । ज्योक् ज्योक्शब्दो दीर्घकालवचनः [च] शब्दः पादपूरणार्थः, विश्वकालं सूर्यम् परार्थरूपं [दृशे] दृशे विख्ये च[1] इ[ ति तु ]मर्थे निपात्यते, द्रष्टुम् । एतदुक्तं भवति—युष्मत्प्रसादादपगतसर्वरोगोऽहं चिरकालमाराध्यं भगवन्तमादित्यं सायुज्यं गमिष्यास [ ?, मि ] इत्यभिप्रायः ॥

---

इ॒दमा॑पः॒ प्र व॑हत॒ यत् किं च॑ दुरि॒तं मयि॑ ।
यद्वा॒हम॑भि दु॒द्रोह॒ यद्वा॑ शे॒प उ॒तानृ॑तम्[2] ॥ ५० ॥

इदम् दुरितमिति संबन्धः । हे आपः प्रवहत प्रकर्षेणापनयत रोधयतेत्यर्थः । यत् किञ्च दुरितं मयि पापमिति वाक्यशेषः । कीदृशं तद् ? उच्यते—यद्वाऽहमभिदुद्रोह जिघांसायां ज्ञानाज्ञानेन प्राणिजातं जघान, यद्वा शेपे शप्तवान् अहमुक्तवान् उतानृतम् अनृतमपि यत् तत् सर्वं नाशयत इत्यर्थः । युष्मत्प्रसादादपगतसर्वकल्मषो भूयासमित्यर्थः ॥

---

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आ ग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा[3] ॥ ५१ ॥

[ आपः ] अद्य अस्मिन् काले अन्वचारिषम् अनुचरामि अहमाश्रितो युष्मानित्यर्थः । युष्मदीयेन रसेन समगस्महि बहुवचनमेकवचनस्य स्थाने, समगंसि संगतोऽहम् । मद्भाग्योपचयविशेषेण यत् किञ्च पयस्वान् पय इति उदकनाम[4] पिबतेर्वा प्यायतेर्वा[5], पीयते हि तद् आप्यायते च,

---

(१) अ० ३।४।११॥   (२) ऋ० १०।९।८॥   (३) ऋ० १०।९।९॥
(४) निघ० १।१२॥   (५) निरु० २।५॥

क्षीरेऽपि समानं निर्वचनम्, तद्वान् वैद्युतः, मेघोदरस्त्वमपि हे अग्न आगहि आविर्भव। आगत्य च तं मा मां भवत्पयःसिक्तहृदयं संसृज संगमय वर्चसा दीप्त्या अथवा ब्राह्मणतेजसा।

तदेतद् युष्मत्प्रसादादहं क्षपितसमस्तकल्मषः सर्वसंपत्संगतो धर्मानुष्ठानयोग्यश्च संजात इति सूक्तस्य समस्तस्यार्थकथनम्॥

॥ इति वाररुचे निरुक्तसमुच्चये द्वितीयः कल्पः॥



# ॥ अथ तृतीयः कल्पः ॥

यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट् करिष्यन्[1] इति श्रुतेरतः परं दर्शपूर्णमासयाज्यानुवाक्या आज्यभाक्प्रभृतिस्विष्टकृत्पर्यन्ता व्याख्यायन्ते—

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः[2] ॥५॥

भारद्वाजस्यार्षम् । अग्निः अग्रशब्दान्नयतेश्च अग्रणीः सेनानीः । तथा च श्रूयते—अग्निर्वै देवानां सेनानीः[3] इति । वृत्राणि वृत्त्वा व्यतिषज्य तिष्ठन्तीति वृत्राणि पपानि । तथा च श्रूयते—व्यतिषक्त इव वै पुरुषः पाप्मना[4] इति । पापानि मनोवाक्कायजकर्मकृतानि यजमानस्य । अथवा वृत्राणि रक्षांसि, तानि च वृत्त्वा व्याप्य सर्वं शेरते । अथवा वृत्रोऽसुरः त्वष्टुः पुत्रः, मेघो वा धूमादिसंघातः । अस्मिन् पक्षे छान्दसमेतद् रूपम्, सर्वम् जङ्घनद् क्रियाभ्यासविषये यङ् द्रष्टव्यः, अत्यर्थं हन्ति ननु च इन्द्रस्य वृत्रवधरूपं कर्म "अथास्य कर्म रसानुप्रदानं वृत्रवधः[5]" इति । सत्यमेवम्, तथापि संयोगरूपेण साहाय्यं प्रतिपद्यमानो वृत्रमसुरं त्वष्टुः पुत्रं मेघं वाऽत्यर्थं हन्ति इत्युच्यते । पूर्वस्मिन्निर्वचनद्वये युक्तमेव । तथा हि श्रूयते—अग्निर्मा तस्मादेनसो विश्वस्मान् मुञ्चत्वंहसः[6] इति च । द्रविणस्युः द्रवतेर्गत्यर्थस्य च द्रविणं धनम्, गम्यते हि तत् सर्वैः प्राप्तुमिष्यत

---

(१) निरु० ८।२२ ॥ तुलना—ऐ० ब्रा० ३।८ ॥ गो० ब्रा० २।३।४ ॥

(२) ऋ० ६।१६।३४ ॥ पौर्णमास्यां प्रथमस्याज्यभागस्यानुवाक्या । तथाहि—'अग्निर्वृत्राणि, त्वं सोमासि सत्पतिरित्याज्यभागौ वार्त्रघ्नौ पौर्णमास्याम्' इति । शां० श्रौ० १।८।१ ॥

(३) तुलना कार्या—अग्निर्वै देवतानामनीकम्, सेनाया वै सेनानीः । शत० ५।३।१।१ ॥

(४) ऐ० ब्रा० ४।४ ॥ (५) निरु० ७।१० ॥

(६) अनुपलब्धमूलमिदम् ॥

इत्यर्थः। द्रविणं धनं हविर्लक्षणं '[सुप] आत्मनः'[1] इच्छतीति क्यच् प्रत्ययः, ततः क्याच्छन्दसि[2] इति उ प्रत्ययः। द्रविणस्युराज्यभागं कामयमान इत्यर्थः। विपन्यया पनायतिः स्तुतिकर्मा, विपन्यया विविधया श्विन्नया (?) स्तुत्या स्तूयमान इति शेषः। समिद्धः, इन्धी दीप्तौ सम्यग् दीपितः[3] शुक्रः शुक्रशब्दो निरुक्तो द्वितीयकल्पे,[4] अतितेजस्वितया विराजमान इत्यर्थः। आहुतः आह्वयतिरर्चतिकर्मा आभिमुख्येन [आ] हूतोऽस्माभिः अर्चितः [अभि] ष्टुत इत्यर्थः। "स्तूयमाना हि देवता वीर्येण वर्धते"[5] इति श्रूयते। वीर्यवृद्धोऽग्निरत्यर्थं हन्तीति संबन्धः॥

---

त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा।
त्वं भद्रो असि क्रतुः[6] ॥५३॥

गोतमस्यार्षम्। प्रत्यक्षकृतोऽयं मन्त्रो मध्यमपुरुषयोगात्, त्वमिति च प्रयुज्यमानत्वात्[7]। त्वम् हे सोम असि भवसि। कीदृशोऽसि? सत्पतिः सतां वेदोदितकर्मनिरतानां पतिः पाता पालयिता वा। त्वं राजा, कस्य? ओषधीनां ब्राह्म[णाना]ञ्च। तथा हि श्रूयते—"सोम ओषधीनामधिपतिः,[8] सोमराजानो ब्राह्मणाः"[9] इति। विराजतीति वै राजोच्यते। उत शब्दोऽप्यर्थे, स च समुच्चयार्थे द्रष्टव्यः। वृत्रहा वृत्रं हतवान् वृत्रहा च। ननु चेन्द्रो वृत्रहेत्युच्यते? उच्यतां कामम्, अयमपि सोमो मध्यमस्थान इन्द्रस्य साहाय्यं वृत्रवधे प्रतिपद्यमानो वृत्रहेत्युच्यते। अथवा वृत्रस्य पापस्य

---

(१) अ० ३।१।८॥ (२) अ० ३।२।१७०॥
(३) 'दीप्तः' इति साधुत्वात्। (४) निरु० समु० पृ० ३८॥
(५) अनुपलब्धमूलमिदम्॥
(६) ऋ० १।९१।५॥ पौर्णमास्यां द्वितीयस्याज्यभागस्यानुवाक्या। द्र० शां० श्रौ० १।८।१॥
(७) अत्र निरुक्तम्—अथ प्रत्यक्षकृता मध्यमपुरुषयोगाः, त्वमिति चैतेन सर्वनाम्ना [७।२] इति।
(८) तुलना—सोम ओषधीनामधिराजः। गो० ब्रा० २।१।१७॥ सोमो वै राजौषधीनाम्। कौ० ब्रा० ४।१२॥ तै० ब्रा० ३।९।१७॥ (९) तै० ब्रा० १।७।४,६॥

रक्षसश्च हन्ता। किं च त्वं भद्रः भजनीयो भूतानां असि भवसि। [क्रतुः] क्रतुश्चासीति सम्बन्धः, प्रकाशयिता चासीत्यर्थः। अथवा [1]क्रतुसाधनत्वात् क्रतुरित्युच्यते, त्वत्साधना हि सर्वेक्रतवः। स त्वं प्रसीदास्माकमिति शेषः॥

---

अ॒ग्निः प्र॒त्नेन॒ मन्म॑ना॒ शुम्भा॑नस्त॒न्वं १॒ स्वाम्।
क॒विर्वि॑प्रे॑ण वावृधे[2] ॥५४॥

विरूपस्यार्षम्। अहविर्भागि सं देवता अल्पत्वमुच्यते[3]। अस्मिन् प्रकरणे हविर्भाज एव देवता निरुच्यन्ते। अग्निः 'अग्रं प्रथमं यज्ञेषु प्रणीयते'[4] इत्यग्निः। प्रत्नेन प्रत्न इति पुराणनाम[5], पुराणेन गीयते, न केन मन्मना मन्यतेः स्तुतिकर्मणो मनिन्प्रत्यय एतद् रूपम्। त्रयीलक्षणेन स्तोत्रेण स्तूयमान इति शेषः। शुम्भानः शोभनो दीप्यमान इत्यर्थः। तन्वम् तनुं स्वाम्, उभावपि शब्दौ द्वितीयैकवचनान्तौ विभक्तिव्यत्ययेन तृतीयार्थे द्रष्टव्यौ तन्वा स्वया स्वेन विग्रहेण तेजोमयेन कविः क्रान्तदर्शनः क्रमतेर्गतिकर्मणः, क्रान्ताङ्गदर्शनं यस्य स लोकेषु लोकपालत्वात् लोकवीक्षणतत्पर इत्यर्थः। अथवा कवतेः शब्दकर्मणः कविः प्राणरूपत्वात् सर्वशब्दानां प्रयोक्ता इत्यर्थः। [विप्रेण] विप्र इति मेधाविनाम[6] अन्यत्र, इह तु विपूर्वस्य प्रा पूरणे इत्यस्य छन्दसि सर्वोपाधिव्यभिचारात् कप्रत्ययः[7]। विप्रेण पूर्णेन तेन सामर्थ्याद् दीर्घेण। कुत एतत्? 'स्तूय-

---

(१) क्रतुशब्देन सोमयागा उच्यन्ते।

(२) ऋ० ८।४४।१२॥ दर्शेष्टौ प्रथमस्याज्यभागस्यानुवाक्या। द्र० शां० श्रौ० १।८।२॥

(३) भ्रष्टोऽत्र पाठः। अयं मन्त्रो दर्शेष्टौ प्रथमाज्यभागस्यानुवाक्या। द्र० शां० श्रौ० १।८।२; आश्व० श्रौत १।५॥ ऋ० ८।४४ सूक्तस्य सायणीय उपोद्घातः।

(४) तुलना—निरु० ७।१४॥ (५) निघ० ३।२७॥ (६) निघ० ३।१५॥

(७) 'आतश्चोपसर्गे' (अ० ३।१।१३६) इत्यनेनाञ्जसैव कप्रत्ययः सिद्धः।

माना वीर्यवन्तः"[1] इति श्रुतेः। परिपूर्णेन वीर्येण वावृधे स्तूयमान इति सम्बन्धः॥

---

जुषाणो अग्निराज्यस्य हविषो वेतु[2] ॥५५॥

[जुषाणः] महत्या प्रीत्या युक्त इत्यर्थः। तथा हि श्रूयते—"एतद् वाग्नेः प्रियं धाम यद् घृतम्" इति। अग्निराज्यस्य हविषः इति षष्ठीश्रुतेर्भागमिति शेषः, 'आज्यभाग्'[3] इति हि श्रूयते। वेतु वेतिरनेकार्थः, इहाशने [पाने] वा वर्तते। अश्नातु पिबतु वा द्रवद्रव्यत्वात्॥

---

सोमं गीर्भिष्ट्वा वयं वर्धयामो वचोविदः।
सुमृळीको न आ विश[4] ॥५६॥

गोतमस्यार्षम्। हे सोम गीर्भिः गृणातेः स्तुतिकर्मणो रूपम्, प्रहर्षजननीभिः त्वा त्वां वयम् वल्लभाः वर्धयाम। वचोविदः वचसां वेदितारः। यैर्वचोभिस्तुष्यसि तेषामिति संबन्धः। सुमृळीकः मृड सुखने अस्मादीकन् प्रत्ययः, शोभनसमर्पिता प्रह्लादशील इत्यर्थः। नः अस्मान् स्तोतॄन् आविश। वमनविरेचनकर्त्ता स सोम अभिमुख्येन प्रविशत्येवं रसरूपे सोमे योज्यम्। चन्द्रमसि तु विशः 'अनेकार्थत्वाद् धातूनाम्'[5] अभिमुख्येन ह्लादयति [इति] योज्यम्॥

---

जुषाणः सोम आज्यस्य हविषो वेतु[6] ॥५७॥

---

(१) अनुपलब्धमूलमिदम्॥
(२) शां० श्रौ० १।८।३॥ दर्शपौर्णमासयोः प्रथमस्याज्यभागस्य याज्या।
(३) अनुपलब्धमूलमिदम्॥
(४) ऋ० १।९१।११॥ दर्शेष्टौ द्वितीयस्याज्यभागस्यानुवाक्या।
(५) तुलना—"बह्वर्था अपि धातवो भवन्ति" इति। महाभाष्य १।३।१॥
(६) दर्शपौर्णमासयोर्द्वितीयस्याज्यभागस्य याज्या। शां० श्रौ० १।८।३॥

......आज्यस्य भागं हविषः हूयमानस्य वेतु अश्नातु पिबतु [ वा ] इत्यर्थः ॥

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति[1] ॥५८॥

अनेन भगवतोऽग्नेः पृथिवी......सम्भोगरूपेण त्रैलोक्येश्वरं[2] प्रतिपाद्यते । अग्निः अग्रणीः भोगानां प्रधानभूतः । तथा च श्रूयते—"अग्निर्वै देवानां मुखं सुहृदयतमः"[3] इति । मूर्द्धा मूर्द्धशब्दः प्रधानवचनः, स्वामिपर्यायः, स्वामी कस्य ? दिवः द्युलोकस्य । ककुत् ककुच्छब्दः स्वामिवचनः । कस्य ? सामर्थ्यादन्तरिक्षस्य । पतिः स्वामी [ कस्य ? ] पृथिव्याः भूलोकस्य, [ अयम् ] अयमिति सन्निकर्षार्थनिर्देशादाहवनीयात्मनाऽवस्थितोऽग्निरभिधीयते । एकमेव ज्योतिः त्रिषु लोकेषु प्रकाशत इत्यर्थः[4] । इत्थं भूतोऽग्निः अपाम् सम्बन्धषष्ठ्येषा सम्बन्धीनि रेतांसि रेतःशब्देन सारभूतं वस्तु उच्यते । यथा ह्यन्नपानाभ्यां हृतस्य रसादिक्रमेण सारभूतं तेजो निष्पद्यते । एवमपां सम्बन्धीनि पुरोडाशादीनि हवींषि रेतांसीत्युच्यन्ते । तानि जिन्वति, जिन्वति प्रीतिकर्मा[5], प्रीत्यान्नभक्षणं लक्ष्यते, भक्षयतु इत्यर्थः । अथवा मध्यमरूपेणापां रेतांसि तत्कारणानि स्थावरजङ्गमानि जिन्वति तर्पयतीत्यर्थः ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्[6] ॥५९॥

(१) ऋ० ८।४४।१६॥ "अग्निर्मूर्द्धेत्याग्नेयस्य पुरोऽनुवाक्या" इति । शां० श्रौ० १।८।४॥
(२) त्रैलोक्यैश्वर्यम्' इति साधु स्यात् (३) ऐ० ब्रा० ७। १६-॥
(४) तथा च मन्त्रवर्णो भवति—स्तोमेन हि दिवि देवासो......ऋ० १०।८८।१०॥ द्र० निरु० ७।२८॥ (५) निरु० ६।२२॥
(६) ऋ० १०।८।६॥ "भुवो यज्ञस्येति याज्या" इति । शां० श्रौ० १।८।५॥

त्रिशिरस्यार्षम् । [ भुवः ] नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्[1] । किं तर्हि ? लङि वर्णव्यापत्तिरडभावश्च, अभवः भवसि । यज्ञस्य दर्शपूर्णमासादेः रजसश्च रजःशब्देनात्रोदकमुच्यते,[2] रञ्जयति भूतानि तर्पयतीत्यर्थः । उदकस्य च वृष्टिलक्षणस्य नेता । तथा च श्रूयते—अग्निर्वा वृष्टिमुदीरयति[3] । तदा पुनर्यज्ञस्य रजसश्च नेता भवसीत्युच्यते । यत्रा नियुद्भिः सांहितिकं दीर्घत्वम् ,[4] यत्र यस्मिन् काले नियुद्भिः, नियुतो वायोः[5] इत्यादिष्टोपयोजनत्वान्नियुच्छब्देन वायवो लक्ष्यन्ते,[6] नियुद्भिर्वायुभिः सचसे भजसि । सचत इति सेवार्थः । सेवार्शस[7] शिवाभिः शिव इति सुखनाम,[8] सुखहेतुभिः, यत्रेति सूक्ते[9]ऽध्याहार्यं तत्र, तस्मिन् काले यज्ञस्य र[ज]सश्च नेता भवसीति संबन्धः । किं च दिवि द्युलोके मूर्द्धानम् प्रधानाङ्गं वायुरुत्थापितः सन् दधिषे धारयति जाज्वल्यमान इति शेषः । कीदृशं मूर्द्धानम् ? स्वर्षाम् स्वःशब्देनादित्य उच्यते[10] । स्वस्थानस्यादित्यस्य स्रष्टारमित्यर्थः । किं च जिह्वाम् ज्वालां हे अग्ने चकृषे करोषि हव्यवाहम् हविषां वोढारं, तथा हवींषि च वहसीत्यर्थः ॥

---

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो रयी॒णाम्[11] ॥६०॥

हिरण्यगर्भस्यार्षम् । प्रजापतिः मध्यमस्थानः[12] । प्रजानां जरायुजादीनां

(१) एतन्मन्त्रव्याख्याने स्कन्दस्वामिनापि—"भुव इति नायं भूशब्दः पञ्चम्यन्तः पृथिवीवचनः । सावेकाचः [ अ० ६।१।१६८ ] इति विभक्तेराद्युदात्तत्ववचनात् ······ किं तर्हि ? आख्यातमेतत्" इत्युक्तम् । निरु० टी० भा० २ पृ० २० २५१॥ दुर्गाचार्यस्तु "भुवः पृथिवीलोकात्" इत्येवं व्याख्यातवान् [ पृ० ३४७ ] तत् स्वरविरोधादुपेक्षणीयम् ॥

(२) 'उदकं रज उच्यते' । निरु० ४।१९॥ (३) तै० सं० २।४।१०॥

(४) अ० ६।३।१३६॥ (५) निघ० १।१५॥

(६) वायोरश्वा लक्ष्यन्ते इति तूचितम् । (७) व्यर्थः पाठः (८) निघ० २।६॥

(९) 'उक्ते' शुद्धः पाठः । (१०) 'स्वरादित्यो भवति' इति । निरु० २।१४॥

(११) ऋ० १०।१२१।१०॥ प्राजापत्ये पुरोनुवाक्या इति सायणः । द्र० तै० ब्रा० २।८।२ भाष्यम् ॥ 'प्रजापते न त्वदिति याज्या' इति । शां० श्रौ० १६।७।३॥ (१२) निघ०५।४॥

वृष्टिदानादिद्वारेण पाता पालयिता वा[१] प्रजापतिः। पातेस्तिनि[२] ह्रस्वत्वम्, पालयतेरन्तलोपश्च। धात्वन्यत्वमात्रम्, अर्थः स एव। हे प्रजापते [न] नेति धातो [?, धातुना] अर्धर्चेनान्तेन सम्बध्यते। [त्वत्] त्वत्तः एतानि भूतानि जरायुजानीत्यन्वयः। विश्वा, [शेश्] छन्दसि बहुलम्[३] इति शेर्लोपः। विश्वानि सर्वाणि जातानि परि शब्दो बभूव इत्याख्यातेन संबध्यते। [ता] तानि। तच्छब्दश्रुतेर्योग्यार्थं संबन्धो यच्छब्दोऽध्याहार्यः। यानि त्वया सृष्टानि तानीति सम्बन्धः, बभूव [परिपू]र्वो भवति रक्षणार्थः[४]। नञोऽत्र संबन्धः। न परिबभूव न पर्य[र]क्षत्, न परिभवति, न रक्षति। त्वमेव रक्षयितुं समर्थ इत्यर्थः। लोकवदिहापि रतिपूर्वीयांज्ञा (?) यत्कामाः स्वर्गादिफलं कामयमानाः ते तुभ्यं जुहुमः तन्नः अस्माकम् अस्तु भवतु। किं च वयं स्याम भवेम पतयो रयीणाम् रयिरिति धननाम[५] धनानां हिरण्यादीनाम्, धनमूलत्वात् सर्वक्रियाणाम्। तथा ह्युक्तम्—धनमूलाः सर्वाः क्रियाः[६] इति॥

---

**तवे॒मे लो॒का प्र॒दिशो॒ दिश॑श्च परा॒वतो॑ नि॒वत॑ उ॒द्वत॑श्च। प्रजा॑पते विश्व॒सृज्जी॒वध॑न्य इ॒दं नो॑ देव॒ प्रति॑ हर्य ह॒व्यम्[७] ॥६१॥**

अनेन प्रजापतेर्विभूतिरुच्यते। [तव] इमे पृथिव्यादयस्त्रयोऽपि लोकाः त्वद्वशे वर्तन्ते न केवलमन्तरिक्षमेव। पृथिव्यादिषु लोकेष्वन्तर्भूतस्यापि समुद्रादेर्भेदत्वेन विवक्षा त्रैलोक्ये 'सावर्णः'[८] इति यथा। प्रदिशः प्रोतादिभिरवान्तर्दिशः प्रदिशः, दिशश्च प्राच्याद्यष्टावपि दिशस्त्वदधीना एवेत्यर्थः।

---

(१) 'प्रजापतिः प्रजानां पाता वा पालयिता वा' इति। निरु० १०।४३॥
(२) उणादिषु 'पातेर्डतिः' [द० उ० १।२७॥ पा० उ० ४।५९] इत्याद्रिना डतिप्रत्ययान्तो व्युत्पाद्यते। तत्र डित्वाट्टिलोपः॥ वररुचिकृतं निर्वचनं न क्वचिदस्माभिर्दृष्टम्॥
(३) अ० ६।१।७०॥ (४) तुलना—'परिपूर्वो भवतिः परिग्रहे परिरक्षायां वा'। निरु० स्कन्द० टी० १०।४३॥ (५) निघ० २।१०॥
(६) अनुपलब्धमूलमिदम्। 'धनमूलाः क्रियाः सर्वा धनमूलं च जीवितम्' इति सुभाषितम्॥
(७) तै० ब्रा० २।८।१॥ प्राजापत्ये पुरोडाशस्येयं याज्या।
द्र० सायणः तै० ब्रा० २।८।१॥ अस्य मन्त्रस्यार्धर्चं निर्दिष्टो वररुचिना।
(८) अ० ६।१।१८२॥

किं च परावतः परावतशब्दो दूरवचनः,[१] तेन च तत्स्थाः पदार्थाः प्रतिनिर्दिश्यन्ते—मञ्चाः क्रोशन्ति[२] इति यथा। दूरप्रतियोगित्वात् समीपशब्दोऽध्याहार्यः। दूरस्थानि समीपस्थानि [ च ] इत्यर्थः। कानि पुनस्तानि? उच्यते—निवत उद्वतश्च, उपसर्गाच्छन्दसि धात्वर्थे[३] इति वतिः। निवतो निर्गतानि उद्वतश्चोद्गतानि उच्छ्रितानि हिम[व]द्धेमकूटप्रभृतीनि, यत्किंचिदन्तरवर्त्ति वस्तुजातं तत्सर्वं त्वदधीनमेवेत्यर्थः। इत्थंभूतः सन् हे प्रजापते विश्वसृक् विश्वस्य भूतजातस्य स्रष्टः जीवधन्यः जीवं प्राणं प्राणिनां धिनोति धारयति यो रसानुप्रदानेन स जीवधन्य उच्यते। 'स त्वं इदम् जङ्घादि वात्र (?) विनिःसृतं नः अस्माकम् देव दानादिगुण प्रतिहर्य, हर्यतिः प्रेप्साकर्मा[४]। प्रेप्सया च ग्रहणं लक्ष्यते। प्रतिगृह्णाण भक्षय इत्यर्थः। हव्यम् हविराज्यरूपम्॥

---

अग्नीषोमा सवेदसा सहूती वनतं गिरः।
सं देवत्रा बभूवथुः[५] ॥ ६२ ॥

गोतमस्यार्षम्। अग्निना सह सोमो स्तूयते। तथा ह्युक्तम्—अथास्य सांस्तविका देवाः—इन्द्रः सोमो वरुणः पूषा बृहस्पतिः[६] इति। अग्नीषोमा, ईदग्नेः सोमवरुणयोः[७] उक्तपदयोरीकारः, सोमस्य च षत्वम्। अग्नीषोमा आमन्त्रितप्रथमाद्विवचनस्य सुपां सुलुक्[८] इत्याकारः, अग्नीषोमौ, सवेदसा समानशब्दस्य सभावश्छन्दसि[९] विधीयते। वेद इति धननाम[१०]। विद्यते ज्ञायते सर्वेण वेदयति इति वा, तद्वन्तं प्रकाशयतीत्यर्थः। हवींषि चात्र धनसमानार्थत्वात्। समानं निर्वचनम्, समानं वेदो धनं हविराख्यं

---

(१) निघ० ३।२६॥ (२) तुलना—महाभाष्य० ४।१।४८॥
(३) अ० ५।१।११८॥ (४) निरु० ७।१७॥
(५) ऋ० १।९३।९॥ पुरोऽनुवाक्येयमग्नीषोमीयस्य पुरोडाशस्य। द्र० शां० श्रौ० १।८।१०॥
(६) निरु० ७।८॥ (७) अ० ६।३।२७॥ (८) अ० ७।१।३९॥
(९) अ० ६।३।८४॥ (१०) निघ० २।१०॥

ययोस्तौ समानवेदसौ समानहविष्कावित्यर्थः। तयोः संबोधनम्। सहूती ह्वयतेः शब्दकर्मणः...[वनतम्]...गिरः गीः स्तुतिः। [सम्] समो बभूवुथुरित्यनेन संबन्धः। देवत्रा देवादिभ्यो द्वितीयासप्तम्यर्थे त्राप्रत्ययः[१] देवेषु बभूवथुः। समित्ययमेकीभावे वर्तते। देवानां मध्ये भिन्नस्थानावपि सह स्तूयेथे इत्यर्थः॥

---

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्[२]॥६३॥

गोतमस्यार्षम्। अग्नीषोमयोः सामर्थ्यं कथ्यते। युवम् युवाम् एतानि इति साभिनयं दर्शयति। एतानि ग्रहनक्षत्रतारावृन्दानि दिवि द्युलोके रोचनानि रुच दीप्तौ दीप्यमानानि अग्निः [च] चशब्दः कर्मोपसंग्रहार्थः त्वं चेति शेषः, हे सोम! सक्रतू क्रतुशब्दः कर्मवचनः[३] प्रज्ञावचनश्चास्ति,[४] समानकर्माणौ समानप्रज्ञौ वा। अधत्तम् अधारयतं धारयथः निरतिशयसामर्थ्ययोगेन। युवयोरुभयोर्माहात्म्येन ध्रियन्त इत्यर्थः। किं च युवम् युवामेव सिन्धून् सिन्धवो नद्यः समुद्रा वा, सिन्धून् स्यन्दनस्वभावान् गङ्गाद्याः, अन्ये (?, अन्यान्) क्षीरोदधिप्रभृतीन् समुद्रान् इति। तांश्च धारयतो लोकस्थित्यर्थम्। माहात्म्यकथनानन्तरं बुद्धौ विपरिवर्तमानमभिलषितमभिधीयते। अभिशस्तेः अभ्युपसर्गपूर्वस्य शसु हिंसायामित्यस्य क्तिन्प्रत्ययान्तस्यैतद् रूपम्, अभिहननरूपत्वात् अवद्यात् अवपूर्वाद्वदतेः पापेऽभिधेये 'अवद्यम्' इति निपात्यते[५]। अवद्यात् पापात् संसाराख्यात् हे अग्निषोमौ अमुञ्चतम् लोडर्थे लङ्, मुञ्चतम्, गृभीतान्, हृग्रहोर्भश्छन्दसि हस्य[६] इति हकारस्य भकारादेशो विधीयते। गृहीतान् संसारपाशबद्धान् अस्मान् इत्यर्थः। युवयोः प्रसादान्मुक्तिं गमिष्याम इत्यर्थः।

---

(१) देवमनुष्यपुरुष [अ० ५।४।५६] इत्यादिना॥
(२) ऋ० १।९३।५॥ याज्येयमग्नीषोमीयस्य पुरोडाशस्य। द्र० शां० श्रौ० १।८।१०॥
(३) निघ० २।१॥ (४) निघ० ३।९॥ (५) अवद्यपण्यवर्याः [अ० ३।१।१०१] इत्यादिनेति शेषः॥ (६) अ० ८।२।३२ भा० वा०॥

इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा ।
मा नो दुःशंस ईशत[1] ॥ ६४ ॥

वसिष्ठास्यार्षम् । इन्द्रेणाग्निः सह स्तूयते । तथा ह्युक्तम्—"अथास्य सांस्तविका देवाः-अग्निः सोमो वरुणः"[2] इत्यादि । हे इन्द्राग्नी अवसा अवतेरक्षणार्थस्य तर्पणार्थस्य वाऽसुन्प्रत्ययान्तस्यैतद् रूपम् । हेतावीयं तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । रक्षणार्थं वेत्यर्थः । आगतम् छान्दसो छकारलोपः आगच्छतम् । अस्मभ्यम् विभक्तिविपरिणामः कार्यः, अस्माकं स्वभूतं यज्ञमित्यर्थः । चर्षणीसहा चर्षणयो मनुष्याः, ते च सामर्थ्यादिह शत्रुभूता गृह्यन्ते । षह मर्षणे अभिभवे छन्दसि[3] इति वचनात् सहिरभिभवार्थः । मनुष्याणां शत्रुभूतानामयष्टृणामभिभवतारौ नाशयितारावित्यर्थः । [ मा ] मेति प्रतिषेधार्थो निपात ईशत इत्याख्यातेन संबध्यते । नः अस्माकम् दुःशंसः दुरित्ययमुपसर्गो निन्दायां वर्तते । दुष्टस्य निन्दारूपस्य वचनस्य शंसितारः दुःशंसो नास्तिका उच्यन्ते । मा ईशत ईश ऐश्वर्ये ईश्वरा मा भूवन् अधिकगुणा मा भूवन् साधूनस्मांस्ते, युवयोः प्रसादेन दुर्जनाः पराभवन्त्वित्यर्थः ॥

---

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः[4] ॥६५॥

वसिष्ठास्यार्षम् । गिर्भिः स्तुतिभिः हविर्भिश्च युवामाराधयन्निति संबन्धः । यतो हविर्भाक्त्वमनयोर्विधीयते । उक्तं च अस्मिन् प्रकरणे हविर्भाजश्च सर्वा देवता निरुच्यन्ते[5] इति । स्तुतिमूलत्वाद् याच्ञायाम्, तत्पूर्वमभिलषितार्थमाह विप्रः विप्र इति मेधाविनाम[6], मेधावी

(१) ऋ० ७।९४।७॥ पुरोनुवाक्येयमैन्द्राग्नपुरोडाशस्य । द्र० शां० श्रौ० १।८।११॥
(२) निरु० ७।१०॥
(३) अनुपलब्धमूलमिदम् ॥ कस्यचिद्धातुपाठस्य तद्वृत्तेश्च वा कस्याश्चिद् वचनमिदं स्यात् ।
(४) ऋ० ७।९३।४॥ याज्येयमैन्द्राग्नपुरोडाशस्य । द्र० शां० श्रौ० ६।१०।९॥
(५) द्रष्टव्यम्—'अग्निः प्रत्नेन' (५४) मन्त्रव्याख्याने वररुचिवचनम् । (६) निघ० ३।१५॥

सकृच्छ्रुतितो ग्रन्थग्रहणे सामर्थ्यान्वितः, स्तुतिकर्मणि कुशलः, प्रमतिम् प्रकृष्टां युक्तायुक्तविवेकनिरूपिणीं संसारबन्धच्छेदमन्तीं [ मतिम् ] इच्छमानः वाञ्छन् ईट्टे ईट्टिरध्येषणाकर्मा प्रार्थनार्थः प्रार्थयते व्यवहार-रूपेण, किं? रयिम् धनम्, कीदृशम्? यशसम् यशःसाधनं कीर्तिकर-मित्यर्थः। पूर्वभाजम् पूर्वेषां पित्रादीनामपि भजनीयमनुष्ठानयोग्यमित्यर्थः। अतः हे इन्द्राग्नी, देवताद्वन्द्वे च[1] इति दीर्घत्वं विधीयते। वृत्रहणा आमन्त्रितप्रथमाद्विवचनस्य सुपां सुलुक्[2] इत्याकारः; वृत्रहणौ वृत्रस्यासुरस्य पापस्य मेघस्य वा हन्तारौ, साहचर्येणाग्निरपि वृत्रहेत्युच्यते। सुवज्रा सुवज्रौ पूर्वेण न्यायेन[3] इन्द्रस्य सम्बन्धः। शोभनेन वज्रेण सुवज्रौ, आयुधसामान्यवचनो वा वज्रशब्दः, स्वायुधौ। प्रशब्दः तिरतमित्यनेन सम्बध्यते। नः अस्मानपि नव्येभिः नव्यैः णु स्तुतावित्यस्यैतद्रूपम् स्तुतैः। अथवा नव्येति नवनाम नवैः अन्येभ्योऽदत्तपूर्वैरित्यर्थः। प्रतिरतम् प्रवर्धयतम्. देष्णैः ददातेः कृत्यार्थे ष्णैप्रत्ययः, देये कैः (?), सामार्थ्याद् धने युवयोः प्रसादेन रक्ष्यो भविष्यामीत्यभिप्रायः।

---

एन्द्र सानसिं रयिं सजित्वानं सदासहम्।
वर्षिष्ठमूतये भर[4] ॥६६॥

मधुच्छन्दस आर्षम्। [आ] आकारो मन्त्रान्तेनाख्यातेन संबध्यते। हे इन्द्र इरादानादिगुण! सानसिम् सानसिशब्दो द्वितीये कल्पे निरुक्तः[5]। संभजनीयं सर्वभूतानामत्यन्तोज्ज्वलमित्यर्थः। रयिम् धनम्, [सजित्वानम्] सहशब्दपूर्वस्य जयतेः क्वनिप्प्रत्ययान्तस्येदं रूपम्, सजयं जयितार-मित्यर्थः। सदासहम् षह मर्षणे सर्वकार्यक्षमम् वर्षिष्ठम् अतिशयेन वृद्धमक्षय-मित्यर्थः। ऊतये ऊतिरवतेरक्षणार्थस्य तर्पणार्थस्य वेदं रूपम्, रक्षणार्थ

(१) अ० ६।३।२६ (२) अ० ७।१।३९॥ (३) साहचर्येणेत्यर्थः।
(४) ऋ० १।८।१॥ पुरोनुवाक्येयमैन्द्रस्य सान्नाय्यस्य। द्र० शां० श्रौ० १।८।१२॥
(५) निरु० समु० पृ० ३०॥

तर्पणार्थं वेत्यर्थः। भर हरतेर्हकारस्य भकारादेशः, आकारस्यात्र संबन्धः, आहार धनं मह्यमित्यर्थः।

अथवा अनेन मन्त्रेण पुत्रः प्रार्थ्यते। हे इन्द्र सानसिम् संभजनीयम् सर्वभूतानामाश्रयणीयं रयिं पुत्राख्यं धनं सजित्वानम् सम्यक् शत्रूणां रोगादीनां च जेतारं सदासहम् सर्वदा मर्षणशीलं क्षमावन्तमित्यर्थः। प्रदर्शनार्थमिदम्, सर्वैरात्मगुणैरुपेतं वर्षिष्ठम् अतिशयेन वृद्धं श्रुतेन, सर्वविद्यापारगमित्यर्थः। ऊतये अवनाय पितॄणामानभ्यः (?; मानृण्यं) ततः। तथा हि—पुत्रः पुरु त्रायते, निपरणाद्वा, पुं नरकं ततस्त्रायत इति वा[1] इत्याचार्यवचनम्।

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः[2]।
तस्मात् पुत्र इति प्रोक्तः पूर्वमेव[3] स्वयम्भुवा[4] ॥

इति मनुवचनम्। आभर आहरास्माकमिति। विभुत्वात् मन्त्रपदानां सर्वथा योजना कर्त्तव्या[5] ॥

---

(१) निरु० २।११॥

(२) 'त्रायते पितरं सुतः' इति मुद्रितः पाठः॥ (३) 'स्वयमेव' इति मुद्रितः पाठः॥

(४) मनु० ९।१३८॥ म० भा० आदि० ७४।३७॥

(५) दुर्गाचार्येणाप्ययमेव सिद्धान्तः स्थिरीकृतः। तथा हि—'......त एतं वक्तुरभिप्राय-वशादन्यार्थत्वमपि भजन्ते मन्त्राः। न ह्येतेष्वर्थस्येयत्तावधारणमस्ति। महार्था ह्येते दुष्परिज्ञानाश्च। यथाश्वारोहवैशेष्यादश्वः साधुः साधुतरश्च वहत्येवमेते वक्तृवैशेष्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति। तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिदध्यात्माधिदैवाधियज्ञोपदर्शनार्थम्। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्नधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः। नात्रापराधोऽस्ति'। [निरु० २।८ दुर्गटी०]॥

स्कन्दस्वमिनापि '......सर्वदर्शनेषु च सर्वे मन्त्रा योजनीयाः। कुतः? स्वयमेव भाष्यकारेण सर्वमन्त्राणां त्रिप्रकारस्य विषयस्य प्रदर्शनाय "अर्थं वाचः पुष्पफलमाह" [निरु० १।२०] इति यज्ञादीनां पुष्पफलत्वेन प्रतिज्ञानात्' इत्युक्तम् [निरु० ७।५ स्कन्द टी०]॥

प्र स॑साहिषे पुरुहूत शत्रू॒ञ्ज्येष्ठ॑स्ते॒ शुष्म॑ इ॒ह रा॒तिर॑स्तु ।
इन्द्रा भ॑र दक्षि॑णेना वसू॑नि पति॒ः सिन्धूनामसि रे॒वती॑नाम् ॥६७॥

जयस्यार्षम् । प्र ससाहिषे इह सहतिरभिभवे निरवति वा तव प्रकर्षेणाभ्यभव (?) अभिभवसि हि पुरुहूत बहुभिर्यजमानैः स्तूयमानो वीर्यवृद्धः सन् बलवान् इत्यर्थः । शत्रून् वृत्रनमुचिप्रभृतीन् ज्येष्ठः अतिशयेन वृद्धः प्रशस्यो वा ते तव शुष्म शुष्म इति बलनाम[2] शुषे[र्म]न् प्रत्ययः, परस्य सांयौगिकं हन्त्यादिकं (?, वलादिकं) शोषयतीति शुष्म अतोऽतिशयवचनः सामर्थ्याद्, इह अस्मदीये यज्ञे, रातिः दानं हविर् अस्तु । अस्मत्प्रत्तेन हविषा परितुष्टः सन् हे इन्द्र आ भर आहारास्माकमिति शेषः । दक्षिणेन दाशतेर्दानार्थस्य[3], दक्षिणो हस्तः, दीयत एतेन देवपितृमनुष्येभ्यः, तेन दक्षिणेन हस्तेन वसूनि वस्विति धननाम[4] वसतेराच्छादनार्थस्य, औणादिक उप्रत्ययः[5] । आच्छादयति तत्सर्वं दोषजातं, वसूनि धानानि कस्मादेवमुच्यते ? यस्मात् त्वं पतिः स्वामी सिन्धूनाम् सिन्धवो नद्यः, इह सामर्थ्यादन्तरिक्षचारिण्यो गृह्यन्ते । अन्तरिक्षचराणां वाहुदेवत्येवमादीनां (?) वा भूचराणाम् । अथवा सिन्धवः समुद्राः क्षीरोदधिप्रभृतीनां समुद्राणां वा असि भवसि । रेवतीनाम् मणिमुक्ताप्रवालदीनां (?; प्रवालादिना) धनेन धनवतीनां, समुद्रपक्षे—पुल्लिङ्गत्वाद् धनवतामिति व्याख्येयम् ॥

---

वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः ।
यो अ॒स्माँ अ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑ ॥६८॥[6]

(१) ऋ० १०।१८०।१॥ याज्येयमैन्द्रस्य सान्नाय्यस्य । द्र० शां० श्रौ० ९।८।१२॥
(२) निघ० २।९॥ (३) 'दाशतेर्वा स्याद् दानकर्मणः' इति निरुक्तम् । १।७॥
(४) निघ० २।१०॥ (५) दश० उ० १।९५॥ पं उ० १।१०॥
(६) ऋ० १०।१५२।४॥ वैमृधस्य हविषो पुरोऽनुवाक्या । द्र० मै० सं० २।२।१०॥४।१२।३॥

ज्ञानस्या (?, शासस्या)र्षम्। [वि] विशब्दो जहीत्यनेनाख्यातेन संबध्यते। नः अस्माकं शत्रुभूतानिति शेषः। हे इन्द्र मृधः [मृध इति] संग्रामनाम[1], मृधं करोतीति णिच् प्रत्ययः, तदन्तात् क्विप्, ततश्च णेरनिटि[2] इति णिलोपः, द्वितीयाबहुवचनमेतत्। मृधः संग्रामकारिणः प्रतियोधनसमर्थान् जहि हन्तेरेतद् रूपम् विशब्दस्यात्र संबन्धः। विजहि विगतजीवितान् कुरु इत्यर्थः। नीचा नीचैः यच्छ यच्छ नियमय निगृहाण अवधारयेत्यर्थः। पृतन्यतः पृतनाशब्दात् संग्रामवचनाद्[3] इच्छार्थे क्यच् प्रत्ययः, ये संग्रामं कर्तुं कामयन्ते। ये न समर्थाः तान् निगृह्य मुञ्चेत्यर्थः। [यः] यश्च तिरोभूय अस्मान् अभिदासति दस्यतिः क्षयार्थः। अभिदासति आभिमुख्येन क्षपयति बाधत इत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तं महादुर्जनं अधरम् निकृष्टं तमः गमय मारयेत्यभिप्रायः॥



मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व[4] ॥६९॥

जयस्यार्षम्। इन्द्रोऽभिधीयते। प्रत्यक्षकृतोऽयं मन्त्रो मध्यमपुरुषयोगात्। इन्द्रश्च मध्यमस्थानोऽसावेव वायुः। मृगः [मृगो] मार्ष्टेर्गतिकर्मणः[5], मृगः शीघ्रगतिरित्यर्थः। [न] उपरिष्टादुपचाराद् नशब्द उपमार्थः। मृग इव यथा मृगः सिंहो व्याघ्रो वा भीमो भयङ्करः, कुचरः कुत्सितं प्राणिवधमुद्दिश्य चरतीति कुचरः; गिरिष्ठाः गिरिः पर्वतः विन्ध्यादिः, तत्र स्थायी, परावतः दूरनामेदं[6], दूरात् स्वस्थानात् तूर्णमामिषार्थम् [आ जगन्थाः] आगच्छेत् तद्वत्। यदा 'कुचरो गिरिष्ठाः' इतीन्द्रस्यैव विशेषणे [तदा] क्वायं न चरतीति[7] वकारस्य सम्प्रसारणे नकारलोपे च कुचरः। अणिमादि-

(१) निघ० २।१७॥ (२) अ० ६।१।५१॥ (३) निघ० २।१७॥
(४) ऋ० १०।१८०।२॥ याज्येयं वैमृधस्य हविषः। द्र० शां० श्रौ० ३।१।३॥ मै० सं० ४।१२।३॥ (५) निरु० १।२०॥ (६) निघ० ३।२६॥
(७) निरु० १।२०॥

५

योगान्न कश्चिन्न चरति, सर्वत्र चरतीत्यर्थः। गिरिष्ठाः गिरिर्मेघः तस्मिन् ह गन्तव्ये स्थातुं शीलमस्येति, गिरिस्थायी समीप सेसीव (?, स्थायी) सप्तम्येषा कूपे गर्गकुलम्[1] इतिवत्। प्रत्यक्षकृतत्वान्मन्त्रस्यैकवाक्यतायै य[त्त]च्छब्दावध्याहार्यौ। यस्त्वं कुचरो गिरिष्ठाः स त्वं परावतः दूरात् स्वर्गाख्यात् स्थानादन्तरिक्षाद्वेत्यर्थः। त्वमागत्य चरुभिराराधितो वीर्यवृद्धः सन् सृकम् वज्रनामैतत्[2] संशाय शो तनूकरणे, समित्येष निरित्येतस्य स्थाने[3] द्रष्टव्यः। निश्शाय तीक्ष्णीकृत्य पविम् एतदपि वज्रनाम्,[4] पुनरुक्तिदोषपरिहारार्थं क्रियायोगमङ्गीकृत्य प्रवर्तते, अहं पार्थो धनञ्जयः[5] इति यथा। पवतिर्गतिकर्मा, पविं गन्तारं शत्रूणां कार्येषु। हे इन्द्र तिग्मम् तिग्मशब्दस्तीक्ष्णवचनः, तिग्मस्वभावेन तीक्ष्णधारं, तेन वज्रेण [वि] विशब्दस्ताळ्हीत्येतेन संबध्यते। शत्रून् दैत्यादीन् [ताळ्हि] ताळ्हीति वधकर्मा,[6] विजहि मारय मदोत्सेधयुक्तान् प्रतियोधनसमर्थान्। ततश्च [वि] विशब्दो नुदस्वेत्यनेन संबध्यते। मृधः निरूपितमेतच्छब्दरूपम्[7]। संग्रामकारिणो दुर्बलान् प्रतियोधनासमर्थान् विनुदस्व प्रेरय इतः स्थानादपनयेत्यर्थः॥

---

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँइव।
स्तोमैर्वत्सस्य वावृधे[8] ॥ ७० ॥

वत्सस्यार्षम्। [महान्] महतेर्दानार्थस्य, ददात्यसौ भक्तान् भूतेभ्योऽनुग्राहकतया जनान् (?) "इतः प्रदानं ह्यमुष्मिन् लोके उपजीवन्ति"[9]

---

(१) तुलना—महाभाष्य० ४।१।४८॥ (२) निघ० २।२०॥

(३) निरुक्ते "निरित्येष समित्येतस्य स्थाने" [१२।७] इत्येवं पाठः॥

(४) निघ० २।२०॥ (५) अनुपलब्धमूलमिदम्॥

(६) निघ० २।१९॥ (७) द्र० निरु० समु० पृ० ६५॥

(८) ऋ० ८।६।१॥ दर्शेष्टौ अनुवाक्येयं माहेन्द्रस्य सान्नाय्यस्य। द्र० आ० श्रौ ९।६॥ शां० श्रौ० १।८।१३॥

(९) तुलना कार्या—तै० सं० ३।२।९॥

इति। इन्द्रः दानादिगुणः...[यः]...ओजसा उब्जतेर्न्यग्भावार्थस्य बलपर्यायः न्यग्भावयत्येतत् शत्रुजातम्, ओजसा बलेन शत्रुक्षयकरेण युक्त इति शेषः, महाबल इत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स महेन्द्रः पर्जन्यो वृष्टिमाँ इव तर्पयतीति [पर्जन्यः] तृपेराद्यन्तविपर्ययेण तकारलोपेन च जन्यप्रत्ययान्तस्यैतद् रूपम्[1], पर्जन्यो वृष्टिमाँ इव यथा पर्जन्यो मध्यमस्थानो वर्षपर्यन्त (?, वर्षयन्) धारात्मना क्रमेण वर्धते। एवं स्तोमैः स्तुतिभिर्निरतिशयप्रीतिजननीभिः वत्सस्य मम वावृधे वर्धते स्तूयमानः॥

भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः।
भुवो नृँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे[2] ॥७१॥

वैकुण्ठस्यार्षम्। भुवः नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्। किं तर्हि? भवतेर्लङि छान्दसत्वादडभावः, वर्णव्यापत्तिश्च[3] अभवः त्वम् हे इन्द्र ब्रह्मणा परिवृद्धेन त्रयीलक्षणेन स्तूयमान इति शेषः। महान् महत्त्वं प्राप्तवान्, महत्त्वं च वृत्रवधादियोगात्। तथा च श्रूयते—इन्द्रो वै वृत्रं हत्वा महानभवत्[4] इति। यो हि भुवनहितं कर्म करोति स महान् भवति। भुवः पूर्ववत् प्रक्रिया कल्पः, अभवः भवसि विश्वेषु सवनेषु सवनमिति यज्ञनाम,[5] यज्ञेषु ज्योतिष्टोमादिषु, अथवा प्रातःसवनादिषु यज्ञियः यष्टव्यः। तथा च श्रूयते—इन्द्रो वै यज्ञः, इन्द्रो यज्ञस्य देवता[6] इति। भुवः भवतिरत्राभिपूर्वो द्रष्टव्यः। कुत एतल्लभ्यते? अर्थसामर्थ्यात्। किं पुनरर्थसामर्थ्यम्? उच्यते–विश्वस्मिन् भरे [भर] इति संग्रामनाम,[7] तत्सन्नि

(१) तुलना—'पर्जन्यस्तृपेः। आद्यन्तविपरीतस्य। तर्पयिता जन्यः' निरु० १०।१० ॥
(२) ऋ० १०।५०।४ ॥ दर्शेष्टौ याज्येयं माहेन्द्रस्य सान्नायस्य। आ० श्रौ० १।६ ॥
(३) द्र० निरु० समु० पृ० ५७ ॥
(४) ऐ० आ० १।१ ॥ तुलना—ऐ० ब्रा० ३।२१ ॥ शत० २।५।४।९; ४।३।३।१७ ॥
(५) निघ० ३।१७ ॥ (६) अनुपलब्धमूलमिदम् ॥ (७) निघ० २।१७ ॥

योगेन नृशब्दश्च शत्रुभूतेषु मनुष्येषु वर्तते, शत्रोरभिभवनमन्वेष्टव्यं शायितव्यत्वात्। अतोऽत्र भवतिरभिपूर्वः शत्रुबाधने वर्तते। इदमत्र वक्तव्यम्—उपसर्गाः किं द्योतका उत वाचका इति? केचिदाहुः—उपसर्गा द्योतकाः इति। उपशब्दः समीपपचनः, समीपस्था (?, समीपस्थयोः) नामाख्यातयोरर्थं विशेषणं सृजन्ति बोधयन्ति द्योतयन्ति इत्युपसर्गाः। कथं? अनेकार्थत्वाद् धातूनां प्रकरणानुरोधिनमर्थमभिदधतः शब्दस्योपसर्जनमात्रे साहाय्यं प्रतिपद्यमानास्तस्यैवार्थस्य द्योतका इति। वाचका इत्यपरे। कुतः? अनेकप्रकारा ह्युपसर्गाणामर्थाः प्रकर्षादयः, प्राहुः अभि[म]तानर्थविशेषान् नामाख्यातयोः, पृथक् प्रयोगेऽपि वाचकत्वमेषां दृष्टम् यदुद्वतो निवतो यासि[1] निष्कौशाम्बिरिति। एवमप्युपसर्गप्रसङ्गेन सर्वेषामुपसर्गाणां सामान्येन मनाक् स्वरूपमुक्तम्। प्रकृतमभिधीयते। अभ्यभवः अभिभवसि नॄन् मनुष्यान् शत्रुभूतान्, च्यौत्नः च्यौत्न इति बलनाम[2], च्यावयति स्वस्मात् स्थानात् रातिमिति। च्यौत्नमस्यास्तीति मत्वर्थीयोऽच्[3] प्रत्ययः। बलवान् महाबल इत्यर्थः। क शत्रूनभिभवसि? विश्वस्मिन् सर्वस्मिन् भरे, भर इति संग्रामनाम भरतेर्वा हरतेर्वा[4]। भ्रियन्ते हि तदर्थं योद्धादयः, ह्रियन्ते वा यौधादीनां प्राणाः। ज्येष्ठश्च देवानां प्रधानभूतः। तथा च श्रूयते—इन्द्रः खलु वै श्रेष्ठो देवानामुपदेशनात्[5] इति। मन्त्रः मनुते बोधते कृतित्वात् बोद्धा च, स्तोतृवर्गं सर्वं ज्ञात्वा सर्वां वा शब्दराशीं लोकपालत्वात् लोकवृत्तान्तं विश्वचर्षणे विश्वस्य सर्वस्य भूतजातस्य शुभाशुभस्य चर्षणिश्चायिता द्रष्टा च, तस्येदं संबोधनं हे विश्वचर्षणे। इत्थं भूतं त्वां स्तुम इति वाक्यशेषः॥

---

(१) ऋ० १०।१४२।४॥ (२) निघ० २।९॥
(३) अ० ५।२।१२७॥ (४) निरु० ४।२४॥
(५) तै० ब्रा० २।२।१॥

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः[1] ॥७२॥

त्रितस्यार्षम् । [ पिप्रीहि ] प्रीङ् तर्पणे प्रीणय देवान् यागाङ्गभूतान् उशतः वश कान्तौ कामयमानान् स्वं स्वं भागमिति शेषः । यविष्ठ अतिशयेन युवन् विद्वान् जानन् स्वमधिकारमस्मद्भक्ततां च । किञ्च ऋतून् वसन्तादीन् ऋतुपते ऋतूनां पालयितः, तैः सह संस्तवदर्शनात् । तथा चोक्तम्—अथास्य सांस्तविका देवाः—इन्द्रः सोमो वरुणः पर्जन्य ऋतवः[2] इति । यज इह अस्मिन् लोके, कस्मादेवमुच्यते ? यस्माद् दैव्याः देवानां स्वभूताः ऋत्विजः अध्वर्युप्रभृतयः तेभिः तैः तृतीयाबहुवचनमेतत् षष्ठीबहुवचनस्य स्थाने द्रष्टव्यम्, तेषां मध्ये हे अग्ने त्वम् एव होतॄणाम् होमं कुर्वताम् असि आ यजिष्ठ आङ् मर्यादायां मर्यादया यथाशास्त्रमतिशयेन यष्टा त्वमेव यतस्ततस्त्वामेव वयं ब्रूम इति ॥

---

अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य[3] ॥७३॥

भारद्वाजस्यार्षम् । प्रत्यक्षकृतोऽयम्मन्त्रो मध्यमपुरुषयोगात् त्वमिति चैतस्य सर्वनाम्नः प्रयुज्यमानत्वाच्[4] [ च ] । संबोधनावद्योतनाय हे शब्दः प्रयोक्तव्यः । हे अग्ने अग्निरग्रं प्रणयनं स्थानं स्वर्गाख्यं निरुपमं सुकृतीन् नयति । वारयत्येनस्च[5] इति नयतेर्द्विकर्मक[ त्व ]स्मरणात् ।

---

(१) ऋ० १०।२।१ ॥ 'पिप्रीहि देवान् इति स्विष्टकृतः पुरोऽनुवाक्या' इति ॥ शां० श्रौ० १।९।१ ॥ (२) निरु० ७।८ ॥

(३) ऋ० ६।१५।१४ ॥ "........अग्ने यदद्य विशो अध्वरस्य इति [ स्विष्टकृतः ] याज्या" इति । शां० श्रौ० १।९।२ ॥ (४) द्र० निरु० ७।२ ॥

(५) अत्र कदाचित् "निवह्योर्हरतेश्च" [ महाभाष्य० १।४।५१ ] इति पाठः स्यात् । अत्रैव हि नयतेर्द्विकर्मकत्वं स्मर्यते ॥

प्रयोगः, तस्येदं संबोधनं हे अग्ने यद्य अस्मिन् काले विशः विश प्रवेशने महात्म्येन कृत्स्नस्य जगतः प्रवेष्टा व्याप्ता अध्वरस्य, ध्वरति हिंसाकर्मा[1] सा हिंसा यस्य नास्ति सोऽध्वरः। कुत एतज्ज्ञायते ? तत्र भवन्तो मीमांसका आहुः—चोदनालक्षणोऽर्थो धर्मः[2] इति। तस्माद् यज्ञे वधोऽवधः[3], [इति स्मरणात्] न वा उ एतन् म्रियते[4] इति च मन्त्रलिङ्गात्[5]। शास्त्रवशात् [अ]हिंसाकर्म

(१) निरु० १।८ ॥ (२) मी० द० १।१।२ ॥
(३) मनु० ५।३९ ॥ (४) ऋ० १।१६२।२१ ॥
(५) यज्ञे पशुहिंसाऽवैदिकौत्तरकालिका च श्रुतिस्मृतीतिहासदर्शनात्, यानि च अजैर्यष्टव्यमित्येवं भूतानि ब्राह्मणवाक्यानि तान्यपि धान्यपराणि। तदुक्तं महाभारते—

ततो दीनान् पशून् दृष्ट्वा ऋषयस्ते तपोधनाः।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः॥
अपरिज्ञानमेतत् ते महान्तं धर्ममिच्छतः।
नहि यज्ञे पशुगणा विधिदृष्टाः पुरन्दर॥
धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो।
नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते॥
आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत्॥
यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः।
एष धर्मो महान् शक्र महागुणफलोदयः॥
म० भा० आश्व० ९१।१२–१६ ॥

अन्यच्च—

अजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः।
अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ॥
म० भा० शान्ति० ३३७।४॥

सुरा मत्स्या मधु मांसमासवं कृशरौदनम्।
धूर्तैः प्रवर्त्तितं ह्येतन्नैतद् वेदेषु दृश्यते॥
म० भा० शान्ति० २६५।९॥

मत्स्यपुराणेऽपि—

अधर्मो बलवानेष हिंसा धर्मेप्सया तव।
नवः पशुविधिरिष्टस्तव यज्ञे सुरोत्तम॥
अधर्मो धर्मघाताय प्रारब्धः पशुभिस्त्वया।
नायं धर्मोऽधर्मोऽयं न हिंसा धर्ममुच्यते॥

यज्ञस्य दर्शपौर्णमासादेः होतः त्वमिति शेषः। पावकशोचे पावयितृ शोधयितृ शोचिः दीप्तिर्यस्य स पावकशोचिः शोचेरिसिन् प्रत्ययः, छान्दसः सकार-

आगमेन भवान् धर्मं प्रकरोतु यदीच्छति।
विधिदृष्टेन यज्ञेन धर्मेणाव्यसनेन च।
यज बीजैः सुरश्रेष्ठ त्रिवर्षपरमोषितैः॥
(मत्स्यपुराण १४२।१२-१४)

अपि च—

'एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून् व्यापादयन्ति ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति। तत्र किलैतदुक्तम्—अजैर्यष्टव्यमिति। अजा व्रीहयस्तावत् सप्तवार्षिकाः कथ्यन्ते। न पुनः पशुविशेष' इति। पञ्चतन्त्रे काकोलूकीये॥

अन्यच्च—

"तथा हि किल वेदे अजैर्यष्टव्यमित्यादिवाक्येषु मिथ्यादृशोऽजशब्दं पशुवाचकतया व्याचक्षते। सम्यग्दृशस्तु जन्माप्रायोग्यं त्रिवार्षिकं यवव्रीह्यादि, पञ्चवार्षिकं तिलमसूरादि, सप्तवार्षिकं कङ्गुसर्षपादि धान्यपर्यायतया पर्यवस्यन्ति" इति स्याद्वादमञ्जरीकारः।

पृ० १७७, १७८॥

एवं च कृत्वा वैदिकी श्रुतिरपि प्रवृत्ता—"यजमानस्य पशून् पाहि" [यजु० १।१] इति। विवृताँश्चेमां भगवान् व्यासः—

पशुहिंसा वारिता हि यजुर्वेदादिमन्त्रतः॥
(महाभारते शान्ति० ३४४। २१॥ कुम्भकोण-संस्करणे)

अत एव यज्ञस्य 'अध्वर' इति नामापि संगच्छते।

मैत्रायणीसंहितायां स्पष्टमेव व्रीहियवयोः पशुत्वं प्रतिपाद्यते। तदुक्तम्—एते वै पशवो यद् व्रीहयश्च यवाश्च। १। ६। ११॥

यानि च "यज्ञे वधोऽवधः", इत्यादीनि मनुवचनानि तानि सर्वाणि प्रक्षिप्तानीति प्रतीयन्ते। यतो ह्युक्तं महाभारते—

अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता॥
सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत्।
कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः॥
(म० भा० शान्ति० २६५। ४, ५)

अपि च पशुयज्ञस्य 'पशुबन्धः' इति नाम, न तु 'पशुवधः'। पुराकाले हि पशवो यूपे बन्धनानन्तरं पर्यग्निकृता उत्सृज्यन्ते स्म, न तु तेषां वधो भवति स्म।

तदेवं पशुयज्ञे पशुवधो सर्वथैवावैदिको गर्ह्यश्चेति स्पष्टम्, विस्तरभिया विरम्यते। विशेषस्त्वस्मद् 'वेदार्थमीमांसा' ग्रन्थे द्रष्टव्यः।

लोपः,[१] ततः सम्बुद्धिगुणः पावकशोचे। वेः वेतेः कान्त्यर्थस्य कान्तो ह्यसौ देवानाम्, शुचिमध्वरं देवा जोषयन्ते[२] इति कान्तस्य। न केवलमद्यैव होता यज्ञस्य किं च त्वं हि हिशब्दोऽवधारणार्थः, त्वमेव यज्वा यष्टा पूर्वस्मिन्नपि काले सर्वस्य यज्ञस्य। यस्मादिति श्रुतेस्तस्मादित्यध्याहार्यः। तस्माद् ऋता ऋतमिति सत्यनाम,[३] ततः तृतीयैकवचनस्य सुपां सुलुक्[४] इत्याकारः। ऋतेन सत्येन यथातथमित्यर्थः। तथा च श्रूयते—"त्वं हि वेत्थ यथातथम्[५]" इति। यजासि पञ्चमो लकारः, यज यागाङ्गभूतान् देवान्, महिना महिन इति महन्नाम[६] प्रथमैकवचनस्य सुपां सुलुक्[४] इत्याकारः महान्। [ वि ] विशब्दो भूरित्यनेन संबध्यते [ यद् ] यच्छब्दश्चार्थे स च हव्याशब्दात् परः द्रष्टव्यः विभूः निग्रहानुग्रहसमर्थो विभूरित्युच्यते। हव्या शेर्लोपः, हव्यानि च [ वह ] वह प्रापणे देवान् प्रति, यजिष्ठ अतिशयेन युवन् या ते यानि हव्यानि अद्य अस्मिन् काले तानीति सम्बन्धः। हविर्वहनं हि भगवतोऽग्नेः प्रथमं कर्म। तथा ह्युक्तम्—अथास्य कर्म वहनं [ च ] हविषाम्[७] इति॥

॥ इति वाररुचे निरुक्तसमुच्चये तृतीयः कल्पः ॥



(१) शुच धातोः 'सर्वधातुभ्य इन्' इत्यनेन इकारान्तं शोचिपदं सिद्ध्यत्येव, किमिसिन् विधानेन सकारलोपेन च।
(२) तुलना कार्या—विश्वे ह्येतदेवा जोषयन्ते। तै० सं० ३।१।१॥ (३) निघ० ३।१०॥
(४) अ० ७।१।३९॥ (५) अनुपलब्धमूलमिदम्॥
(६) निघण्टौ [ ३।३ ] न पठ्यते॥ (७) निरु० ७।८॥

# अथ चतुर्थः कल्पः

'एकत्रिंशद्विधं'[1] मन्त्रं यो वेत्त्यृक्षु स मन्त्रवित्[2]' इति वचनाद् एकत्रिंशद्-विधा मन्त्रा व्याख्यायन्ते—

दैव्याश्शमितार आरभध्वमुत मनुष्या उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम्। एकधाऽस्य त्वचमाच्छयतात् पुरा नाभ्या अपि शसो वपामुत्-खिदतादन्तरेवोष्माणं वारयध्वात्। श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शलादोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेक-पर्णाऽष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षः संसृजतात्। वनिष्ठुमस्य माराविष्टोरूकं मन्यमाना नेद् वस्तोके तनये रविता रवच्छमितारः। अध्रिगो शमीध्वं सुशमि शमीध्वम्[3] ॥ ७४ ॥

---

(१) बृहद्देवतायां मन्त्राणां षट्त्रिंशद्विधत्वं प्रतिपादितम्। द्र० बृ० दे० १।३५—३९॥ हरिस्वामीनातु शतपथविवरणस्योपाद्धाते—'एते पञ्चचत्वारिंशदवान्तरभेदा वाक्यस्य' इत्युक्तम्। भरतमुनिनाऽपि 'षट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसम्मि-तानि' (१६।४) इत्यनेन अलंकाराणां षट्त्रिशत्वमुक्तम्। स्कन्दस्वामिना तु "मन्त्राः पञ्चप्रकाराः। प्रैषाः, करणाः, क्रियमाणानुवादिनः, शस्त्राभिष्टवनादिगताः, जपानु-वचनादिगता इति" इत्युक्तम् ( ऋ० भा० उपोद्धाते )। ब्रह्माण्डपुराणेऽप्येतादृशी काचिद् गणना वर्तते। द्र० वम्बई संस्क० पत्रा ६१ ख।

(२) अनुपलब्धमूलमिदम् ॥ (३) आश्व० श्रौ० ३।३॥ ऐ० ब्रा० २।६,७॥ एतन्मन्त्र विषये

इति प्रैषः (१)। विश्वामित्रस्यार्षम् । दैव्याः देवानां स्वभूता अध्रिगुप्रभृतयः हे शमितारः उत मनुष्याः मनुष्या अध्वर्युप्रभृतयः सर्व एव यूयमिमं पशुं मारयितुम् आरभध्वम् आरम्भार्थो (?) उपनयत उपगच्छत मेध्याः मेध इति यज्ञः, तत्र भूताः, दुरः द्वाराणि यज्ञगृहद्वाराणि चात्वालोत्कर-योर्मध्यमित्यर्थः। आशासाना कामयमानाः स्वं स्वं भागमिति मेधपतिभ्याम् मेधो यज्ञः तत्साधनभूतः पशुरपि मेध उच्यते, तस्य पती स्वामिनौ तावग्नीषोमौ तयोरर्थाय मेधम् मेधसाधनः पशुः [ प्र ] प्रशब्दः पुरस्तादर्थे वर्तते, अनेकार्थत्वादुपसर्गाणाम्। कुत एतज्ज्ञायते ? "तस्योल्मुकं पुरस्ता-द्धरन्ति[१]" इति श्रुतेः। पुरस्ताद् अस्मै तादर्थ्येषा [ चतुर्थी ] अग्निम् उल्कां भरत हरत। स्तृणीत बर्हिः यत्रैष निहन्यते तत्र बर्हिः दर्भांस्तृणीत। [ अनु ] अनुशब्दो मन्यतामित्यनेन सम्बध्यते। एनं माता अनु मन्यताम् बधार्थमस्योत्क्रमार्थं [ च ]। अनु पिता पतव (?, पितापि) अनु मन्यतामित्यनुषङ्गः सर्वत्र। अनु भ्राता भ्रातानुमन्यताम्। कीदृशो भ्राता ? सगर्भ्यः समानगर्भे भवः सगर्भ्यः। अनु सखा सखा चानुमन्य-ताम्। कीदृशोऽसौ ? सयूथ्यः यूथशब्दः संघातवचनः, समाने यूथे भवः सयूथ्यः। उदीचीनान् अस्य सार्यमाणस्य पशोः पदः पादान् निध-त्तात्, तस्य तात्[२] इति तादादेशः सर्वत्र निधत्त। सूर्यं चक्षुर्गमयतात् सूर्यप्रभवत्वात् सूर्यमेवास्य चक्षुर्गमयत। सर्वेन्द्रियाणामेवं धर्मत्वेऽपि वचनात् यथान्यायं कारणपरिग्रहार्थम्[३] धर्मं (?, द्रव्यं) हि विनश्यन् कारणं गच्छति। वातं प्राणमन्वसृजतात् मुखनासिकाभ्यां यो वायुः निस्सरति सोऽयं प्राणोऽभिप्रेतः। अन्तरिक्षम् प्रति असुम् प्रति प्राणं शरीर-धारणम्, दिशः प्रति श्रोत्रम्, पृथिवीम् प्रति शरीरम् अन्वसृजतेत्यनुषङ्गः सर्वत्र। एकधा एकेन प्रकारेण अखण्डिताम् अस्य त्वचमाच्छयतात् पुरा

मीमांसाशाबरभाष्ये ९।४।२२—२७ सूत्राणि द्रष्टव्यानि। स्कन्दस्वामिनो निरुक्त टीका (भाग २, पृष्ठ ३३२) च।

(१) ऐ० ब्रा० २।११॥ (२) अ० ७।१।४४॥ (३) स्कन्दनिरुक्तटीका पाठोऽप्यत्र भ्रष्टः। एतदाधारेण स शोधनीयः। द्र० भाग २, पृष्ठ ३३२।

नाभ्याः नाभेः । अपि शसः आवर्तरूपात् वपामुत्खिदतात् उद्धरत । अन्तरेवोष्माणं वारयध्वात् मुखनासिकानिश्चारिणं वायुमस्य वारयत निरुच्छ्वासं संज्ञपयतेत्यर्थः । श्येनम् श्येनादयः शब्दा उपमार्थत्वेनोपादीयन्ते, श्येनाकारम् अस्य वक्षः कृणुतात् कुरुत । प्रशसा द्विवचनस्य सुपां सुलुक्[1] इत्याकारः, प्रकर्षेण शस्यते हन्यते ऽनेनेति प्रशः शस्त्रमुच्यते[2] । स्वधिती वा शस्त्राकारावित्येके । अथवा प्रशस्तौ बाहू कृणुत इत्यनुषङ्गः सर्वत्र । शला दोषणी शलाकाकारे दोषणी दीर्घे इत्यर्थः । कश्यपेवांसा कश्यपेवांसौ । अच्छिद्रे श्रोणी साकल्यमेवाच्छिद्रत्वम् । कवषोरू कवषा [ काराव् ] ऊरू स्रेकपर्णाऽष्ठीवन्ता स्रेकः करवीरः तस्य पर्णाकारावष्ठीवन्तौ तौ च कृत्स्नाविनत्यर्थः । षड्विंशतिरस्य वङ्क्रयः पर्शवः ता अनुष्ठ्या अनुष्ठाने यत्नेन कृत्स्ना उच्च्यावयतात् उत्कृन्तत । एवं गात्रं गात्रमस्यानूनं [ कृणुतात् ] अनतिरिक्तं च कृणुत । ऊवध्यगोहम् भक्षितं तृणादिकं यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यम्, तस्मिन् गृह्यते प्रच्छाद्यते स ऊवध्यगोहः, तं च पार्थिवं पृथिव्यां भवं खनतात् कृतन्त । अस्ना असृक्शब्दस्य लोहितवचनस्य पद्[3] आदिसूत्रेण असन्नादेशः, अस्ना लोहितेन रक्षः संसृजतात् संयोजयत, तद्धि रक्षसां भागः । वनिष्ठुमस्य वपासमीपे सन्तं वपाखनने मा राविष्ट मा राविष्ट । ऊरुकम् विस्तीर्णं वपालक्षणं[4] चैतदित्येवं मन्यमानाः, एवं च कुर्वताम् नेत् इच्छब्दोऽवधारणार्थः न इत् नैव वः युष्माकं तोके तनये द्वे अप्येते अपत्यनाम्नी[5], पौनरुक्त्यपरिहारार्थं तोकशब्देन पुत्रोऽभिधीयते तनयशब्देन च पौत्रः, बह्वर्थमेकवचनम्, पुत्रेषु पौत्रेषु च पुत्राणां पौत्राणां च मध्ये रविता शब्दकरः रवत् रु शब्दे शब्दयिष्यति । हे शमितारः एतज्ज्ञात्वा हे अध्रिगो प्रदर्शनार्थमिदमध्रिगुग्रहणं, अध्रिगुप्रभृतयः

---

(१) अ० ७।१।३९॥ (२) अयं पाठः स्कन्देन 'केचित्' पदेन स्मृतः, उत्तरः 'अपरे' पदेन । द्र० निरु० टीका भाग २, पृष्ठ ३३२

(३) अ० ६।१।६३॥ (४) वररुचेरिदं व्याख्यानं मीमांसाशावरभाष्यसम्मतम् । द्र० मीमांसाभाष्य ९।४।२२॥ सायणेन तु 'उरूकं' पदस्य उलूकपक्षिसदृशम्' इति व्याख्यानं कृतम् । द्र० तै० ब्रा० ३।६।६॥ (५) निघ० २।२॥

शमितारः शमीध्वम् शमयत सुशमि शमीध्वम् शमितं च शमयत मा शङ्कां कुरुध्वं हिंसेति। धर्म एव सा हिंसा शास्त्रेण[१] विहितत्वात्, अस्य च पशोरुत्कर्षो भवति। तथा च श्रूयते—

यज्ञार्थं निधनं प्राप्ता प्राप्नुवन्त्युच्छ्रितिं पुनः[२]। इति।

हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति[३] इति च॥

---

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः।
एभिर्वर्धास इन्दुभिः[४] ॥ ७५ ॥

इत्याह्वानम् (२)। भारद्वाजस्यार्षम्। [ आ ] आकारः सन्निकर्षार्थः। आ इहि आगच्छ अस्मद्यज्ञमिति शेषः। उ उकारः पदपूरणः। सु ब्रवाणि शोभनं सूनृतं वचनं ब्रवाणि वदानि [ते] त्वद्गुणसंयुक्तं स्तुतिशेषः। अत एव हे अग्ने········त्वं तेभ्यः शृणु इत्यभिप्रायः। कस्मादिति चेत्? यस्माद् इत्था इत्थेति सत्यनाम[५], सत्यवचनमस्मदीयं सत्यरूपत्वात् तुष्टिकरमित्यभिप्रायः। अन्येषां तु इतराः असत्याः सत्याद् विपरीतवृत्तयः गिरः वाचः [ वचनं ] विपरीतत्वान्न प्रीतिकरमित्यभिप्रायः। श्रुत्वा चानन्तरं एभिः तात्तीयसवनिकैः इन्दुभिः सोमैः वर्धासे पञ्चमो लकारः वर्धासे वर्धस्व। एतदुक्तं भवति—'स्तुतिभिः स्तूयमानः पीत्वा च सोमं [ वीर्ये ]वृद्धः सन् देवद्विषो जहीत्याहूयसे' इति।

---

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्।
नकिरेव यथा त्वम्[६] ॥ ७६ ॥

इति स्तुतिः (३)। वामदेवस्यार्षम्। गुणगुणिसम्बन्धप्रतिपादनं स्तुतिरुच्यते। [ नकिः ] नकिरिति निरित्येतस्य स्थाने प्रतिषेधवचन-

(१) द्र० निरु० समु० पृ० ७० टि० ५॥ (२) मनु० ५।४०॥ (३) ऐ० ब्रा० २।१४॥
(४) ऋ० ६।१६।१६॥ (५) निघ० ३।१०॥ (६) ऋ० ४।३०।१॥

स्याकच्प्रत्ययान्तस्यैतद् रूपम्, नास्तीत्यर्थः हे इन्द्र त्वत् त्वत्तः उत्तरः उत्कृष्टः देवेष्वित्यर्थः। कुत एतत्? इन्द्रो वै देवानामोजिष्ठो बलिष्ठः[1] इति श्रुतेः। किं च न ज्यायान् [ अस्ति ] ज्यायानपि नास्ति कुतः? महत्त्व-योगात्। हे वृत्रहन् वृत्रमसुरं त्वष्टुः पुत्रं मेध्व्यधपरिपक्व (?, मेघं च परिघ्नन्)। किं बहुना नकिरेव यथा त्वम् यादृशोऽसि त्वं तादृशोऽपि नास्ति। त्वत्तुल्योऽपि न कश्चित् त्रैलोक्ये विद्यत इत्यर्थः॥

मोघ॒मन्नं॑ विन्दते॒ अप्र॑चेताः स॒त्यं ब्र॑वीमि व॒ध इत् स त॒स्य॑।
नार्य॒मणं॒ पुष्य॑ति नो सखा॑यं॒ केव॑लाघो भवति केवला॒दी[2] ॥७७॥

इति निन्दा (४)। भिक्षोरार्षम्। मोघं व्यर्थं विफलम् अन्नं विन्दते लभते भुङ्क्ते इत्यर्थः। अप्रचेताः अप्रज्ञः प्रकर्षेणाजानन् धर्ममित्यर्थः। सत्यं ब्रवीमि यदेतदुक्तं तत् सत्यमेव अथ वध······धारणार्थः वर्धयति[3] प्राणान् इति वधः वज्र एव स अन्नलाभः अभ्यवहारः [ तस्य ] अभ्यवहर्तुः। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्त्तव्यः उत्तरार्धर्चे योजनीयः। [ यः ] नार्यमणं पुष्यति अरीणां भयान्निर्हन्तारमग्निं न पुष्यति नार्चयति नाग्नौ जुहोतीति वैश्वदेवादिकं न करोतीत्यर्थः। नो सखायम् नापि सखिभूतमतिथिं पूजयति। केवलाघो भवति अघमिति पापनाम, आङ्पूर्वाद्धन्तेरुपसर्गस्य ह्रस्वत्वेन हकारस्य च घत्वेन अघम्[4]- आभिमुख्येन हन्ति तत् कर्त्तारं कदाचित्, केवलं पापरूपो भवति केवलादी केवल शब्दोऽसहायवचनः केवलभोजी असहायभोजीत्यर्थः। स मोघमन्नं विन्दते त [ स्मा ]त् तस्य वधो भवति। इति सम्बन्धः। कुत एतत्? अहमन्नमन्नमदन्तमद्मि[5] इति मन्त्रलिङ्गात्। मन्त्रलिङ्गमूलं यस्य चाग्नौ न क्रियते यस्य च अन्न·········न भोक्तव्यमित्यर्थः॥

(१) ऐ० ब्रा० ७।१६॥ (२) ऋ० १०।११७।६॥
(३) हिंसयति इत्यर्थः। (४) द्र० निरु० ६।११॥ (५) तै० उ० भृगु० १०।६॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्[1] ॥७८॥

इति संख्या (२)। दीर्घतमस आर्षम्। गौरीः छान्दसत्वात् सुलोपाभावः। वाङ्नामैतत्,[2] वाङ्मध्यमस्थाना मेघजन्मा न्तनपि अलक्षणोपचार (?) अधिष्ठात्रीत्युच्यते, सा मिमाय माङ् माने मिमीते कृत्स्नं जगद् इति शेषः। तक्षती कुर्वती सलिलानि वृष्टिलक्षणानि, तक्षतिः करोतिकर्मा[3] कुर्वती एकपदी पदं स्थानमाश्रयमित्यर्थः। किं तत्? अन्तरिक्षम्, तद्धि तस्याः स्थानम्, तद् यस्याः सा एकपदी। द्विपदी मध्यमेन [चादित्येन च][4] सहिता वृत्रवधमाचरन् वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। सा चतुष्पदी अष्टापदी दिग्भिः, दिशोऽवकाशदानेनास्य वृष्टिकर्मणि सहकारिकारणत्वं प्रतिपद्यन्ते। अष्टापदी अवान्तरदिशश्च ताश्चैवं तद्धर्माणः (?)। नवपदी ताभिश्चादित्येन च, असावादित्यो न्यङ्रश्मिभिः पर्यावर्तते अथ वर्षति[5] इति वचनात् वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते, तत एवमुच्यते नवपदी, बभूवुषी एकपद्यादिक्रमेण वर्धमाना इत्यर्थः सहस्राक्षरा सहस्रमिति बहुनाम[6] अक्षरमित्युदकनाम[7] अक्षयत्वात्। तथा हि श्रूयते—तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते[8] इति। सहस्राक्षरा बहूदका क्रमेणोपचीयमानेन वर्षेणावयन्त धारात्मना कृत्स्नं जगद् व्याप्नोतीत्यर्थः। परमे प्रकृष्टे व्योमन्, सुपां सुलुक्[9] इति सप्तम्येकवचनस्य लुग् द्रष्टव्यः, व्योमनि अन्तरिक्षे स्वस्मिन् स्थाने स्थितेति वाक्यशेषः।

---

(१) ऋ० १।१६४।४१॥ (२) निघ० १।११॥
(३) अनुपलब्धमूलमिदम्॥ (४) द्र० स्कन्दनिरुक्तटीका ११।४०।
(५) तै० सं० २।४ १०॥ निरु० ७।२४॥
(६) निघ० ३।१॥ (७) निघ० १।१२॥
(८) अनुपलब्धमूलमिदम्॥ (९) अ० ७।१।३९॥

तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम्[1] ॥
इत्याशीः ( ६ ) अयं मन्त्रो द्वितीये कल्पे व्याख्यातः[2] ॥

---

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम् ।
योनिमेक आ ससाद द्योतनोऽन्तर्देवेषु मेधिरः[3] ॥ ७९ ॥

इति कर्म ( ७ )। काश्यपस्यार्षम्। सोमः स्तूयते, उत्तरेणार्धर्चेन वैद्युतोऽग्निः। बभ्रुः बभ्रुवर्णः सोमः एकः असहायः विषुणः विषमः विषमशब्देन समर्थ उच्यते, एक एव कर्मसु समर्थ इत्यर्थः। सूनरः शोभनाः कर्त्तव्यपदार्थज्ञा नरा मनुष्या अध्वर्य्वादयो यस्य सम्बन्धित्वेन सन्ति स सूनरः शोभननरः। पदकारेणैतत् पदं नावगृहीतं तथापि भाष्यकारवचनात् पदकोऽस्मनाहत्यैतन्निरुक्तम्[4]। युवा यौतेः कनिन्प्रत्ययान्तस्य प्रयौति मिश्रयति कर्माणि प्रातःसवनादीनि, इतरोऽपि युवा तरुणः स्यात् क्षिप्रं कर्माणि मिश्रयति अञ्जि अनक्ति व्यञ्जनशीलः अङ्क्ते अभिव्यञ्जयति उत्पादयतीत्यर्थः। हिरण्ययम् हिरण्यशब्देनोदकमुच्यते। कुत एतत्? उदकमपि हिरण्यमुच्यते[5] इति भाष्यकारवचनात्। हिरण्ययमुदकसंघातम्। एतदुक्तं भवति—इन्द्रादिदेवतातृप्तिद्वारेण सर्वप्राणिव्यञ्जनहेतुभूतमुदकं सोमः सम्पादयतीत्यर्थः। योनिम् योनिशब्देनान्तरिक्षमुच्यते, अन्तरिक्षमेव एकः वैद्युतः योनिम् आससाद ज्ञातवान् प्राप्तवानित्यर्थः। द्योतनः, द्युत दीप्तौ दीप्यमानः अन्तः अन्तःशब्दो मध्यमवचनः देवेषु

---

(१) ऋ० ७।६६।१६

(२) निरु० समु० पृ० ३८ ॥ अत एवास्यात्र गणना न कृता। (३) ऋ० ८।२९।१॥

(४) निरुक्तसमुच्चयकृत् सर्वत्र भाष्यकारपदेन निरुक्तकारं यास्कं निर्दिशति। परमत्र भाष्यकारनाम्ना कस्य मतमुद्धरतीति न विज्ञायते। यतो हि सूनरपदस्य निर्वचनं निरुक्ते न क्वचिदुपलभ्यते ॥

(५) इदमपि वचनं निरुक्ते नोपलब्धमस्माभिः ॥

मध्यमस्थानेषु वाय्वादिषु मेधिरः मेधाशब्दो धनवचनः,[१] प्रज्ञावच[२]-नोऽप्यस्ति, मेधाशब्दान्मत्वर्थीय इरच्प्रत्ययः। मेघोदरगतेनोदकलक्षणेन धनेन धनवान् वा, प्रज्ञावान् वा प्रज्ञाहेतुभूतः अतिबहुलतिमिरावकुण्ठितायां रात्र्यां घटपटादिभावानां प्रकाशयिता इत्यर्थः ॥



अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ॥
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्[३] ॥८०॥

इति कत्थना (८)। अर्थाभिव्यक्त्यर्थमस्यां प्रथमं तावदाख्यानं प्रस्तौति—'प्रजापतेर्दुहिता विकुण्ठा नामासुरक्षेत्रे सम्भूता पुत्रमिन्द्रमिच्छन्ती किल बहुतपश्चकार। तस्यास्तपसो महानुभावादिन्द्रत्वभयाच्च देवैश्वर्यमवहाय इन्द्र एव पुत्रो जज्ञे। स जन्मान्तरिततिरोहितपूर्वस्मरणानुसंधानः सन् सप्तगुर्नामा[४] ऋषिभिरभिष्टुतो हृष्टात्मा च महत्त्वानुकीर्त्तनपुरःसरमेतेन श्लाघते[५]" अतः ?) प्रत्यक्षार्थीयोऽयं मन्त्र उत्तमपुरुषयोगात्, अहमिति चैतस्य सर्वनाम्नः श्रवणाच्च[६]। इन्द्र एवर्षिः, इन्द्र एव देवता। कुत एतत्? उत्तमस्य तु वर्गस्य य ऋषिः सैव देवता[७] इति वचनात्। अहम् इत्यमात्मानं साभिनयं दर्शयति भुवम् नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्। किं तर्हि? भवतेर्लुङि उत्तमपुरुषैकवचने छान्दसत्वादडभावो ह्रस्वत्वं[८] च [ अभूवम्। लङि तु ] अकार-

(१) निघ० २। १० ॥
(२) यास्केन पदमिदं प्रज्ञानामसु न पठितम्। कौत्सव्यनिघण्टौ तु बुद्धिनामसु [ खण्ड० ८४ ] पठ्यते ॥ (३) ऋ० १०।४८।१ ॥
(४) बृहद्देवतासर्वानुक्रमण्योस्तु सप्तगुर्नाम ऋषेरस्ति, येनायं प्रबोधितः। यथा त्वत्र पाठस्तथा सप्तगुर्नाम वैकुण्ठस्य विज्ञायते, ऋषिभिश्च बहुभिः ( नैकेन ) स प्रबोधितः।
(५) तुलना—बृहद्देवता ७।४२-५८ ॥ सर्वानुक्रमणी १०।४८। पृ० ३८ ॥
(६) निरुक्ते त्विदं लक्षणमाध्यात्मिक्यानामृचामुच्यते। द्र० निरु० ७। २ ॥
(७) अनुपलब्धमूलमिदम् ॥
(८) तुलना कार्यां-स्कन्दनिरुक्तटीका ७। २। पृष्ठ १२ ॥ निरुक्तसमुच्चय पृष्ठ ५७.

स्योत्वं च अभवं भवामि। वसुनः वस्विति धननाम[1] धनस्य सर्वस्य पूर्व्यः पुराणनामेदं पुराणो नित्यं पतिः स्वामी अहम् एव धनानि, प्रधन इति संग्रामनाम,[2] प्रशब्दलोपे द्वितीयाबहुवचनान्तमेतत् संजयामि सम्यक् बहुसुहृद्वधवर्जं जयामि। शश्वतः शश्वच्छब्दो बहुवचनः[3] बहून्, अथवा सञ्जयामि बह्वोः शत्रोरिति शेषः। माम् एव हवन्ते आह्वयन्ति सर्वे यजमानाः ज्योतिष्टोमादिषु कर्मसु। किमिव ? पितरं न नशब्द उपमार्थः, पितरमिव जन्तवः मनुष्यनामैतत्, मनुष्याः सर्वकर्मसु। अहम् एव दाशुषे दाश्वानिति शाकपूणिना नैरुक्ताचार्येण यजमाननामसु पठ्यते[4] हवींषि दत्तवते यजमानगणाय, विभजामि ददामि भोजनम् धननामैतत्[5] धनं यो यावद्ददाति हविर्भाग् बहु वा अहमपि तस्मै तावदेव ददामीत्यर्थः। कुतः ? "यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति[6]" इति श्रुतेः॥

---

पृ॒च्छामि॑ त्वा॒ पर॒मन्तं॑ पृथि॒व्याः पृ॒च्छामि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑। पृ॒च्छामि॑ त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॑ पृ॒च्छामि॑ वा॒चः प॑र॒मं व्योम॑[7] ॥८१॥

अथर्व० ९-१०.१२.
यजुः २३-६१

इति प्रश्नः (९)। दीर्घतमस आर्षम्। विज्ञानमयं क्षेत्रं पृच्छति ऋत्विग्गणो यजमानम्[8]। पृच्छामि त्वा त्वां परमम् प्रकृष्ट अन्तम् अन्तशब्दः प्रदेशवचनः पृथिव्याः अतिशयेन सारभूतं प्रदेशत्वात्। पृच्छामि पृच्छतेर्द्विकर्मकत्वस्मरणात्[9] द्विकर्मकत्वप्रयोगः। [ यत्र ] यत्रशब्दो यच्छब्दार्थे द्रष्टव्यः, यः भुवनस्य भूतजातस्य नाभिः नाभिशब्देनाश्रय उच्यते। तथा

(१) निघ० २। १०॥ (२) निरु० ९। २३॥ (३) निघ० ३। १॥
(४) द्र० स्कन्दनिरुक्तटीका भा० १ पृ० ४९॥ (५) निघ० २।१० (६) ऐ० ब्रा० ३।६॥
(७) ऋ० १। १६४। ३४॥ (८) कात्यायनश्रौतसूत्रे २०। ७। १४-'यजमानोऽध्वर्युं पृच्छामि त्वेति' इति श्रूयते। (९) महाभाष्य० १। ४। ५१॥

च—नाभिः संहननात् प्रदेशवचनः[1] [ इति ] निरुक्तम् । सन्नद्ध एतेनाङ्गेन कृत्स्नं शरीरं प्राणधारणत्वात्, तं त्वा पृच्छामीति सम्बन्धः । पृच्छामि त्वा त्वां वृष्णः वर्षयितुः अश्वस्य रेतः । पृच्छामि सर्वत्राध्वर्य्वादिरूपायाः वाचः परमम् उत्कृष्टं व्योम स्थानम् ॥

---

इ॒यं वेदिः॒ परो॒ अन्तः॑ पृथि॒व्या अ॒यं य॒ज्ञो भुव॑नस्य॒ नाभिः॑ ।
अ॒यं सोमो॒ वृष्णो॒ अश्व॑स्य॒ रेतो॑ ब्र॒ह्मायं वा॒चः प॑र॒मं व्यो॑म[2] ॥८२॥

अथर्व—९.१०.१४; यजु. २३.६२

[ इति ] व्याकरणं प्रतिवचनम् (१०) । पूर्वस्मिन् मन्त्रे चत्वारः प्रश्नाः कृताः । तेषामानुपूर्व्येण चत्वारि प्रतिवचनानि अनेन मन्त्रेण प्रतिपाद्यन्ते । इयं वेदिः यागभूमिः परः उत्कृष्टः अन्तः सारभूतं पृथिव्याः । कुत एतत् ? देवयजनं वै वरं पृथिव्याम्[3] इति श्रुतेः । अयं सोमः ग्रहचमसादिपात्रस्थः वृष्णः वर्षयितुः अश्वस्य व्याप्तुरिन्द्रस्य रेतः । कथम् ? अयमेव हि पीतो रसादिक्रमेण इन्द्रस्य रेतो वीर्यं मदोत्सेधमापादयति । ब्रह्मायम् अयमेव हि ब्रह्मा ब्रह्मासनमध्यासीनः वाचः सर्वस्या अध्वर्य्वादिरूपायाः परमम् उत्कृष्टं व्योम स्थानम् । कथम् ? ब्रह्मा परिवृढः श्रुततः[4] इति वचनात्, त्रय्या विद्यया ब्रह्मत्वं कुर्यात्[5] इति श्रुतेः । यो हि निगमनिरुक्तव्याकरणादिकलापयुक्तः स एव ब्रह्मत्वं कर्त्तुमर्हति नान्य इति ॥

---

(१) निरुक्ते [ ४।२१ ] तु 'नाभिः संहननात्' इत्येव पाठः ॥
(२) ऋ० १ । १६४ । ३५ ॥
(३) तुलना—'देवयजनं वै वरं पृथिव्यै' । ऐ० ब्रा० १ । १३ ॥ (४) निरु० १।८॥
(५) तुलना—'अथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयात्' इति । ऐ० ब्रा० ५ । ३३ ॥

इ॒दमा॑पः॒ प्र व॑हत॒ यत् किं च॑ दुरि॒तं मयि॑ ।
यद्वा॒हम॑भिदु॒द्रोह॒ यद्वा॑ शे॒प उ॒तानृ॑तम्[1] ॥

इति शोधितः (११)। अयमपि मन्त्रो द्वितीये कल्पे[2] व्याख्यातः ॥

---

इन्द्र॒ क्रतुं॑ न॒ आ भ॑र पि॒ता पु॒त्रेभ्यो॒ यथा॑ ।
शिक्षा॑ णो अ॒स्मिन् पु॑रुहूत॒ याम॑नि जी॒वा ज्योति॑रशीमहि[3] ॥८३॥

इति विकल्पः (१२)। अनेकवाक्यकल्पनया विकल्पः। देवताविकल्पो वा "वायुरिति नैरुक्ताः", "सूर्य इति याज्ञिकाः[4]"। शक्तिर्नाम वसिष्ठपुत्रः तस्यार्षम्[5]।

प्रथमं तावद् याज्ञिकमतेन व्याख्यायते—इन्द्र यो दीपयति रश्मिद्वारेणानुप्रविश्य भूतानि इति इन्द्र आदित्य उच्यते। असौ वा आदित्य इन्द्रः[6] इति च श्रुतेः। [हे] इन्द्र आदित्य [क्रतुम्] क्रतुरिति कर्म[7] वा प्रज्ञा वोच्यते[8]। कर्म अतिरात्रयागफललक्षणं [नः] अस्माकम् आभर आहर, पिता पुत्रेभ्यो यथा पिता पुत्रहितेच्छया कर्मादृष्टानुश्राविकं सुखसाधनमारभेत तद्वत्, किञ्च शिक्ष शिक्षतिर्दानकर्मा देहि नः अस्मभ्यमन्यदप्यभिलषितम् अस्मिन् हे पुरुहूत पुरुस्तुत यामनि यातेर्मनिन् प्रत्ययः, यापयति स्वर्गमास्थानमिति यामशब्देन यज्ञोऽभिधीयते। यज्ञे जीवाः मत्वर्थीयोऽच्प्रत्ययः जीवन्तः, चिरमपि जीवन्त इत्यर्थः। ज्योतिः आभ्य-

---

(१) ऋ० १०। ९। ८॥ (२) निरु० समु० पृ० ५०॥
(३) ऋ० ७। ३२। २६॥ (४) द्र०—निरु० समु० पृ० १ टि० १॥ निरुक्तसमुच्चयकृता नैरुक्तानां याज्ञिकानां च मतं कुतः संगृहीतमिति न विद्मः। शौनककात्यायनाभ्यां त्वस्य मन्त्रस्येन्द्रो देवतेत्युक्तम्। द्र०—बृ० दे० ५। १४४; सर्वा० ७। ३२॥
(५) पूर्वार्धर्चस्य वसिष्ठपुत्रः शक्तिर्ऋषिः, उत्तरार्धर्चस्य वसिष्ठ इति शाट्यायनब्राह्मणम्। वसिष्ठ एवर्षिरिति ताण्ड्यब्राह्मणम्। तथा चानुक्रान्तं कात्यायनेन—"सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथमालेभे, सोऽर्धर्च उक्तेऽदह्यत, तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकम्। वसिष्ठस्यैव हतपुत्रस्यार्षमिति ताण्डकम्" इति। सर्वा० ७। ३२॥
(६) अनुपलब्धमूलमिदम्॥ (७) निघ० २। १॥ (८) निघ० ३। ९॥

न्तरम् अशीमहि अशू व्याप्तौ व्याप्नुयाम, त्वया सायुज्यं गमिष्याम इत्यभिप्रायः ॥

नैरुक्तपक्षेऽपि—इन्द्र दानादिगुण, इन्द्रो मध्यस्थानो वायुरुच्यते। हे इन्द्र वायो क्रतुम् वृष्टिलक्षणं [ नः ] अस्माकम् आभर आहर पिता पुत्रेभ्यो यथा धननिमित्तं कर्म शिक्ष देहि नः अस्मभ्यं स्तोतृभ्यः कामानिति शेषः। अस्मिन् हे पुरुहूत पुरुस्तुत यामनि यापयति क्षपयति भूतानि यामच्छन्द ······कालवचनः। काले वर्षाख्ये त्वद्दत्तेनोदकेन जीवाः जीवन्तो ज्योतिः परमात्माख्यम् अशीमहि। तेन सायुज्यं गमिष्याम इत्यभिप्रायः ॥

यदि॑न्द्रा॒हं य॒था त्वमीशी॑य॒ वस्व॒ एक॒ इत्।
स्तो॒ता मे॒ गोष॑खा स्यात्[1] ॥८४॥

इति संकल्पः ( १३ )। गोसूक्तेर्वाश्वसूक्तेर्वार्षम्। [ यद् ] यदि हे इन्द्र अहं यथा त्वम् सर्वस्य धनस्येश्वरोऽभूस्तथाहम् ईशीय ईश्वरो भवानि वस्वः वसुनो धनस्य सर्वस्य एक इत् इच्छब्दोऽवधारणार्थः, एक एव, तथा सति स्तोता मे मम गोषखा गवां सखा स्वामी स्यात् भवेत्। प्रदर्शनार्थमिदं गोग्रहणं गवादीनां धनानां पतिर्भवेत्। एतदुक्तं भवति—यदि त्वं सर्वेश्वरो मह्यं स्तोत्रे बहुधनं ददासि, अहमप्यभिलषितैरर्थैः स्तोतॄणां मनोरथं पूरयेयमिति संकल्पः ॥

सु॒दे॒वो अ॒द्य प्र॒पते॒दना॑वृत्परा॒वतं॑ पर॒मां गन्त॒वा उ॑।
अधा॒ शयी॑त॒ निर्ऋ॑तेरु॒पस्थेऽधै॑नं॒ वृका॑ रभ॒सासो॑ अ॒द्युः[2] ॥८५॥

इति परिदेवना ( १४ )। उर्वश्या वियुक्तः पुरुरवा विललाप। सुदेव शोभनं देवनं क्रीडनं यस्य स सुदेवः, यथाभिलषितं परिभुक्तसर्वभोग

(१) ऋ० ८। १४। १॥ (२) ऋ० १०। ९५। १४॥

इत्यर्थः। अद्य सम्प्रत्येव शिखरिशिखरमारुह्य प्रपतेत् प्रकर्षेण प्रमतिरसु (?, पतति असौ) अनावृत् आवर्तनमावृत, अनावर्तनं क्रियाविशेषणमेतत्। किमर्थम्? परावतम् दूरं परमाम् परावतमत्यन्तं दूरं यमलोकमित्यर्थः, गन्तवै गन्तुम् [ उ ] उकारः पादपूरणार्थः, गतश्वसन् अध अथशब्दपर्यायः, अनन्तरं शयीत निर्ऋतेः प्रलयाधिदेवतायाः उपस्थे अङ्के समीपसप्तम्येषा 'कूपे गर्गं कुलम्'[1] इति यथा। यमस्य समीपे प्रदेशे गत्वा शेते इत्यर्थः। शयितं च अध अनन्तरमेव एनं वृकाः विकर्त्तनगुणयुक्ताः तत्पुरुषाः रभसासः रभसशब्दो वेगवचनो मत्वर्थीयोऽच्प्रत्ययान्तो द्रष्टव्यः, वेगवन्तः अद्युः भक्षयेयुः। अथवोत्तरार्धर्चस्यान्यथा योजना—अध अनन्तरं शयीत निश्शेत इत्यर्थः, शयीत निर्ऋतेः निर्ऋतिः पृथिवीनाम[2] पृथिव्या उपस्थे सानुदेशे शयीत शयितं च अध अनन्तरमेव एनं वृकाः विकर्त्तनशीला मृगाः रभसासः वेगवन्तः अद्युः भक्षयेयुः। तथापि युक्तो नाहं कष्टं जीवामीति धिङ्मामित्यभिप्रायः। एवमितिहासपक्षे योजना।

नैरुक्तपक्षे तु—पुरुरवा मध्यमस्थानो वाय्वादीनामेकतमः पुरु रौतीति पुरुरवाः, उर्वशी विद्युत् उरु विस्तीर्णमन्तरिक्षमश्नुते दीप्यत इति उर्वशी। वर्षाकाले विद्युति विनष्टायां तया वियुक्तः स्तनयित्नुलक्षणं शब्दं कुर्वन् विलपति। सुदेवः शकिसद (?) अद्य प्रपतेत् अस्मात्स्थानादन्तरिक्षात् अनावृत् अनावर्तनं परावतं परमां अत्यन्तदूरं पृथिवीलोकं गन्तवै गन्तुं गतश्वापर्यन्त (?) धारात्मना [ अध ] अनन्तरं शयीत निर्ऋतेः पृथिव्याः उपस्थे उपगम्यापो यत्र तिष्ठन्ति स उपस्थः कटकादिप्रदेशः[3] तस्मिन् अध अनन्तरम् एनम् उदकात्मनावस्थितं वृकाः वृका ज्योतिष्काः[4] काले अद्युः भक्षयेयुरित्यर्थः। एवं नैरुक्तपक्षे योजना॥ आदित्याः

(१) तुलना—महाभाष्य० ४।१।४८॥

(२) निघ० १।१॥ (३) तडागादिरूपो निम्नप्रदेशः।

(४) आदित्योऽपि वृक उच्यते (निरु० ५।२०) इति वचनात् वृक आदित्यः। अत्र बहुवचननिर्देशात् तद्रश्मयो गृह्यन्ते।

औपचारिकोऽयं मन्त्रेष्वाख्यानसमयो नित्यत्वविरोधात् । परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः[1] ॥

यत्ते॑ य॒मं वै॑वस्व॒तं मनो॑ ज॒गाम॑ दूर॒कम् ।
तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑[2] ॥८६॥

इति—अनुबन्धः (१५) । अत्रैवं श्रूयते—"असमातिनाम्नो राज्ञः पुरोहिताभ्यां मायाविभ्यां [ सुबन्धुः प्राणैर्वियोजितः । ततः ] शोकसन्तप्तहृदया बन्ध्वादयस्त्रयो भ्रातरो मनसः पुनरावर्तनं जेपुः यत्ते यममिति सूक्तम्"[3] इति । यत् ते तव मन इति सम्बन्धः यमम् प्रेतराजं वैवस्वतम् आदित्यं, सावर्णी यमजीजनत्[4], तं वैवस्वतं मनः मनःशब्दो नात्रान्तर्यामी, प्रधानभूतः प्राण उच्यते । तथाहि श्रूयते—"प्राणमुत्क्रामन्तं सर्वे प्राणा अनुक्रामन्ति"[5] इति । जगाम गतवान् दूरकम् मनसो विशेषणमेतत्, दूरेऽपि सन् प्राणिनां वृत्तान्तं केतति जानाति इति, दूरकं तत् ते तव आवर्त्तयामसि आवर्तयामः पुनरानेष्याम इत्यर्थः । किमर्थम् ? इह लोके क्षयाय निवासाय जीवसे जीवितुं सुखं जीवनाय चेत्यर्थः ॥

प्र॒या॒जान् मे॑ अनुया॒जाँश्च॒ केव॑ला॒नूर्ज॑स्वन्तं ह॒विषो॑ दत्त भा॒गम् ।
घृ॒तं चा॒पां पुरु॑षं॒ चौष॑धीनाम॒ग्नेश्च॑ दी॒र्घमायु॑रस्तु देवाः[6] ॥८७॥

इति याच्ञा (१६) । एवं तथा श्रूयते—"सौची[क]मग्निं विश्वेदेवा ऊचुः हव्यं नो वहेति । सोऽग्निरब्रवीदभागोऽहं यज्ञे मृत्योश्च बिभेमीति । ते देवा पुनरब्रुवन् । अभिलषितं ब्रूहीति । ततो हविर्भागमविनश्वरमायुश्चायाचयत्[7] [इति] ।

(१) द्र० स्कन्दनिरु० टी० २।७८ ॥ दुर्ग० टी० पृ० ७४२ ॥ (२) ऋ० १०।५८।१ ॥
(३) तु० बृ० दे० ७।८२–८७ ॥ सर्वा० १०।५६, ५८ ॥ शाट्यायनकं च सायणेन ऋ० १०।५७।१ व्याख्यान उद्धृतम् ।
(४) तुलना—निरु० १२।१० ॥ (५) बृ० उ० ४।४।२ ॥
(६) ऋ० १०।५१।८ ॥ (७) तु० बृ० दे० ७।६२ ॥ सर्वा० १०।२१ ॥

प्रयाजान् मे मह्यम् अनुयाजाँश्च केवलान् अ[न]न्यदेवत्यान् मद्देवत्यान् [ए]वेत्यर्थः। सिंहावलोकनन्यायेन 'दत्त' इत्याख्यातमाकृष्टव्यम्, दत्त ऊर्जस्वन्तम् ऊर्क्शब्दोऽन्नवचनः[१], अन्नवन्तमन्नविकारं पुरोडाशं हविषो भागं दत्त घृतं च आज्यभागाख्यम् अपाम् विकारभूतमिति वाक्यशेषः। पुरुषं च [पुरु] बहुलकर्म सुनोतीति पुरुषः सवनीयः पशुरुच्यते। तेन विनीयन्ते सवनानि। तथा हि—वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने प्रचरन्ति[२] इति वचनात्। तं च सवनीयम् ओषधीनाम् अत्तारमिति शेषः। अग्नेश्च मम दीर्घम् शाश्वतम् आयुरस्तु भवतु हे देवाः॥

---

तव॑ प्र॒या॒जा अ॑नुया॒जाश्च॒ केव॑ल ऊ॒र्जस्व॑न्तो ह॒विषः॑ सन्तु भा॒गाः।
तवा॑ग्ने य॒ज्ञो॒३॒॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः[३] ॥८८॥

इति प्रसवः—अभ्यनुज्ञा (१७)। एवमग्निना याचिता विश्वेदेवा प्रत्यूचुः। तव प्रयाजा अनुयाजाश्च केवलः देवतान्तररहिता उर्जस्वन्तः ऊर्क्-शब्दो रसवचनम्। हविषः सम्बन्धिनः सन्तु भवन्तु भागाः परिगणिताः। प्रार्थितादधिकमपि दद्मः, तव एव हे अग्ने यज्ञोऽयं सर्वः अस्तु यदि कामयसे। किंच तुभ्यम् तादर्थ्ये चतुर्थ्येषा त्वदर्थं नमन्ताम् प्रह्वी भवन्तु प्रदिशः प्रकृष्टा दिशः चतस्रः प्राच्याद्याः, सर्वासां च दिशां त्वमेवेश्वरो भवेद् इति प्रसादातिरेकः कथ्यते। महतां हि प्रसादोऽनेकभद्र इति॥

---

ओ चि॒त् सखा॑यं स॒ख्या व॑वृत्यां ति॒रः पु॒रू चि॑दर्ण॒वं ज॑ग॒न्वान्।
पि॒तुर्नपा॑त॒मा द॑धीत वे॒धा अधि॒ क्षमि॑ प्रत॒रं दीध्या॑नः[४] ॥८९॥

(१) निघ० २।७॥ (२) तु० शां० ब्रा० १२।६॥ (३) ऋ० १०।५१।९॥
(४) ऋ० १०।१०।१॥

इति संवादः (१८)। उक्तिप्रत्युक्तिरूपो भवो वादः संवाद इत्युच्यते। प्रथमं तावदैतिहासिकमतानुसारेणायं मन्त्रो व्याख्यायते। यमयम्योः संवादसूक्तम्, विवस्वतो दुहिता यमं भ्रातरं मदपरवशीकृता सर्वेन्द्रिय-प्रतिभोगार्थं चकमे। ओ चित् आ उ ओ उकारः पदपूरणः, चिच्छब्दश्च। आकारो विवृत्यामित्यनेन संबध्यते। सखायं यमं सख्या तृतीयैकवचनं प्रथमैकवचनस्य स्थाने सखी सती ववृत्याम् इत्येतच्छान्दसं रूपम् आभि-मुख्येन कामये इत्यर्थः। तिरः क्रियाविशेषणमेतत् समयविरोधात् प्रच्छन्नवाक्यार्थसम्पादनार्थं यत्तच्छब्दावध्याहर्यौ। यमहं कामये सोऽपि पुरु [पुरु] इति बहुनाम[1] चित् चशब्दार्थे बहु च अर्णवम् अर्णशब्देनोक-मुच्यते, मत्वर्थीयो वकारः अर्णसो लोपश्च[2] इति सकारलोपः। अर्णवं बहुरेतस्कमित्यर्थः। जगन्वान् गतवान् प्राप्तवान् प्राप्ताभिनवयौवन एवेत्यर्थः। अतः पितुः स्वस्या अपि वैवस्वतः नपातम् नपादित्यनन्तरायाः प्रजाया नामधेयम्[3] पौत्रमित्यर्थः। आदधीत कारणभूतं गर्भं मयीति शेषः। वेधा मेधावी अधि क्षमि अधीत्युपभोगे [क्षमि] छान्दसमेवैतद् रूपं, क्षमा पृथिवी तस्या उपरि पृथिवीलोक इत्यर्थः। प्रतरम् प्रकृष्टतरं पुत्रो-त्पादनेन दीध्यानः दीप्यमानः। एवमैतिहासिकपक्षे योजना॥

नैरुक्तपक्षे तु—यमी मध्यमस्थाना वाक् यमश्च मध्यमस्थानः। सा यमी वर्षाकाले मध्यमस्थानाभिमुख्येन सखायं सहस्थानयोगात् सखी-त्यर्थः, कामयेयमहं कामयेत् (?) सोऽपि [ तिरः ] तिरः सत इति प्राप्तस्य नामनी[4] प्राप्तवर्षासमये [पुरु] बहुलम् [अर्णवम्] उदकभूयस्त्वं [ जगन्वान् ] गतवान्, गतश्च स्वस्य पितुः आदित्यस्य, कथमादित्योऽस्य पिता? उच्यते—आदित्यो रश्मिभिः पर्यावर्तमानो रसान् मध्यमायार्पयन् तं पतितोऽ (?; पातवान् अतोऽ)सावस्य पितेत्युच्यते। तस्यादित्यस्य नपातम् एकानन्तरत्वात् पौत्रस्थानीयमुदकसंघातम् आदधीत। वेधा विविधं

---

(१) निघ० ३।१॥ (२) अ० ५।२।२०९ वा०॥ (३) निरु० ८।५॥
(४) निरु० ३।२०॥ तत्र 'नामनी' इति पदं नास्ति॥

वृष्टिप्रदानेन धाता धारयिता सर्वस्य जगतः अधि क्षमि पृथिव्या उपरि पृथिव्यामित्यर्थः । दीध्यानः ध्यै चिन्तायां चिन्तयन्, कथं नु नाम लोकः सुखं जीवेद् इति । एवं नित्यत्वाविरोधेन योज्यम् ।

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।
आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्[1] ॥ ९० ॥

इति समुच्चयः (१९)। अग्नेस्ताप[स]स्यार्षम् । सोमं राजानमवसे रक्षणायात्मनः, अग्निं गीर्भिः स्तुतिभिः हवामहे आह्वयामोऽभिष्टुयाम इत्यर्थः । आदित्यान् विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं च । एतदुक्तं भवति—त्रिस्थाननिवासिनो देवान् वन्दामहे, तेऽपि नः प्रसीदन्तु भक्तानामभिलषितस्य प्रदातार इति ॥

भोजायाश्वं संमृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना ।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम्[2] ॥९१॥

इति प्रशंसा (२०)। प्रजापतेर्दुहिता दक्षिणानामा तस्या आर्षम् । दानप्रशंसैषा । [ भोजाय ] भोजयतीति भोजोऽन्नदातोच्यते । कुत एतत्? स इद् भोजो गृहवे ददात्यन्नकामाय चरते कृशाय[3] इति मन्त्रान्तरदर्शनात् । तस्य तदर्थम् अश्वं संमृजन्ति संस्कुर्वन्ति शालिहोत्रोपदिष्टेन निपुणाः परिचारकाः । कीदृशमश्वम्? आशुम् शीघ्रगतिं काम्बोजादिदेशजातम् । किं च भोजायास्ते कन्या कमनीया लावण्यातिशयविशेषेण शुम्भमाना वस्त्रालङ्कारादिना च दीप्यमाना, भोजस्येदं पुष्करिणीव पुष्करिणीं सदृशहृदया ह्रदानसहितं वेश्म गृहं परिष्कृतम् मनोरमणीयचित्रकर्मकुट्टिम-

(१) ऋ० १० । १४१ । ३ ॥ (२) ऋ० १० । १०७ । १० ॥
(३) ऋ० १० । ११७ । ३ ॥

शोभया सर्वतो विभूषितम् देवमाना प्रथमैकवचनस्य 'सुपां सुलुक्'[1] इत्याकारः, देवमानम् इव चित्रम् विचित्रमाश्चर्यभूतम्। अल्पमिदमुक्तम् यत् किञ्चित् दुर्लभं जगति भद्रमस्ति तस्य सर्वस्य भोजनं भोज इति।

---

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य।
अधा स वीरैर्दशभिर्वियूया यो मा मोघं यातुधानेत्याह[2] ॥९२॥

इति शपथः (२१)। वसिष्ठस्यार्षम्। अत्रेतिहासमाचक्षते—विश्वामित्रप्रयुक्तः किल कश्चिद् राक्षसो मायावी वसिष्ठरूपेण वसिष्ठस्य पुत्रशतं जघान। ततो वसिष्ठं प्रत्यपवादशङ्काऽजायत। लोकापवादवज्रेणाभिहतः पुत्रवियोगशोकाग्निना संतप्यमानहृदयश्च वसिष्ठः प्रस्तुत[ापवाद]निवृत्तये पैजवनस्य राज्ञः समक्षं शपथं चकार। अद्य अस्मिन् काले मुरीय म्रियेयं यदि अहं यातुधानः पिशिताशनः अस्मि भवामि, यदि वायुः यदि वा अस्यायुः जीवितं [ततप] तपिर्नाशार्थः, नाशितवानहं पुरुषस्य यस्य कस्यचित्। अध अथशब्दपर्यायः स च हेतौ, यत एतदलीकं [ततः] सः सोऽपि वीरैः पुत्रैः दशभिर्वियूयाः पुरुषव्यत्ययः[3] वियूयात्, यौतिः पृथग्भावे वर्तते पृथग् भवेत् यो मा मां शुद्धात्मानं मोघं व्यर्थमेव यातुधानेत्याह यातुधानेत्येवमसूयन् तवाया (?) अक्षममाण आह। सोऽप्यहमिव हतपुत्रः पुत्रवियोगाग्निसंतप्यमानहृदयः शयीत इत्यर्थः॥

---

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम्।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः[4] ॥ ९३ ॥

---

(१) अ० ७।१।३९॥ (२) ऋ० ७।१०४।१५॥
(३) तुलना—"पुरुषव्यत्ययः—अधा स वीरैर्दशभिर्वियूयाः, वियूयादितिप्राप्ते"। महाभाष्य० ३।१।८५॥ (४) ऋ० ७।१०४।२५॥

इति शापः (२२)। वसिष्ठस्यार्षम्। वसिष्ठो राक्षसैरभिभूयमानो रक्षसामपनोदार्थमिन्द्रासोमावाह। प्रति चक्ष्व प्रति वचनं कुरु भक्षयेत्यर्थः। विचक्ष्व विशब्दो कुत्सायां द्रष्टव्यः, कुत्सितान्यपि वचनानि दुर्जनत्वाद्वद, दुर्जनस्य कटुवचनं शमनकरं न मदुवचनम्, तवापि लोक[ाप]वादत्वहेतु खलु सारूप्यमित्यादि (?) इन्द्रश्च चशब्दस्य कर्मोपसंग्रहत्वात्[1] त्वं चेति शेषः। हे सोम जागृतम् जागृ निद्राक्षये विनिद्रौ भवथः रक्षोभ्यः रन्ध्रान्वेषणपराणि हि रक्षांसि, ततो विनिद्रौ रक्षोभ्यः वधम् वध इति वज्रनाम[2] वज्रम् अस्यतम् असु क्षेपणे प्रक्षिपतम् अशनिम् [अशनि]सदृशं यातुमद्भ्यः पिशिताशिभ्यः, तादर्थ्ये चतुर्थ्येषा, निवृत्त्या चात्र प्रयोजनम्, मशकेभ्यो धूम इति यथा, रक्षांसि विनाशार्थमित्यर्थः॥

---

इह मद एव मघवन्निन्द्र तेऽश्व इति। श्वः सुत्यां वा एषां ब्राह्मणानां तामिन्द्रायेन्द्राग्निभ्यां प्रब्रवीमि मित्रावरुणाभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन् वाचं यच्छ[3] ॥ ९४ ॥

[इति अतिप्रैषः] (२३)·········नित्यामन्तत्र ············गणे प्रयुज्यते। विश्वामित्रस्यार्षम्। इह मद एव इहैव यज्ञे मद सोमपानादीत्रि ············भूतेऽप्यहनि अद्य गत्वा देवलोकं भुक्तशय्यादिसंभोगः प्रथते पुनरेह्यस्मद् यज्ञमेव कीदृशस्य तव वसुमतः वसुप्रभृतिर्देवाः तद्वतः तैः सहितस्येत्यर्थः श्वः सुत्यां हे अग्नीत् इन्द्राय इन्द्राग्निभ्यां च समुच्छ्रिताभ्यां प्रब्रूहि मित्रावरुणादिभ्यश्च। हे ब्रह्मन् वाचं यच्छ वाचंयम आस्स्व।

---

(१) द्र०—निघ० १।४॥ (२) निघ० २।२०॥
(३) आश्व० श्रौ० ६।११॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास[1] ॥९५॥

इति आचिख्यासा (२४) । आख्यातुमिच्छा आचिख्यासा । प्रजापतेः परमेष्ठिनः परमर्षेरार्षम् । प्रलयादूर्ध्वं प्राग् जगत्सृष्टेर्याऽवस्था साऽनयर्चोच्यते । न मृत्युरासीत् मर्तॄणामभावात् मृत्युश्च नासीत् । अमृतम् जीवनमपि [ न ] नैवासीत् प्राणिनामभावात् । तर्हि तस्मिन् काले न रात्र्याः नापि रात्रेः अह्न आसीत् प्रकेतः प्रज्ञानम्, इयं रात्रिरिदमहरिति । तथा च स्मरणम्—आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्[2] इति ।

अथवा प्रकेतः प्रज्ञापयिताऽऽदित्यः, स ह्युदयास्तमयाभ्यां रात्र्यहनी विभजते । स नासीत्, प्रदर्शनार्थमिदं सर्वे च देवाः । आनीत् अन प्राणने प्राणितवत् केवलमित्यर्थः । अवातम् नाभिप्रदेशादुत्थितो यो वातो मुखनासिकाभ्यां निर्गच्छति तद्रहितम, अलौकिकमेतत् प्राणनमित्यर्थः । स्वधया स्वधा शब्दोऽन्नवचनः[3] स्वधयाऽन्नेन तत्रैव शक्त्यात्मनावस्थितवद् इत्यर्थः । तदेकम् कारणमात्माख्यं ब्रह्म तस्मात् ह [ह] इति पदपूरणः [ अन्यत् ] अन्यत् शब्द 'आस' इत्यनेन संबध्यते । परः परं किं च च शब्दोऽप्यर्थे किमपि [ न ] आस न बभूव । तदेवैकमासीदित्यर्थः ॥

एता अश्वा आ प्लवन्ते ॥ प्रतीपं प्राति सुत्वनम् ॥
तासामेका हरिक्निका ॥ हरिक्निके किमिच्छसि[4] ॥इत्यादि ॥९६॥

इति प्रलापः (२५) । असम्बद्धभाषणं प्रलापः । अत्रैवं श्रूयते—"एतशो नाम मुनिः तव सोमपानभावेनाग्नेरायुरविनश्वरं ददर्श । तद्दर्शनोपजातानन्दपरितोषः सन्दष्ट इव पूर्वापरासम्बद्धं प्रालपीत्"[5] । एता अश्वा आप्ल-

(१) ऋ० १० । १२९ । २ ॥ (२) मनु० १ । ४ ॥ (३) निघ० २ । ७ ॥
(४) अथ० २० ।१२९।१—४॥ (५) अनुपलब्धमूलम् ॥

वन्ते कथं प्रतीपं प्रति स्रोतः, कीदृशं प्रातिसत्वनम् सत्वनशब्दः सत्वपर्यायः' सत्वशब्दः प्राणिपर्यायः। प्रतिसत्वनस्य भावः प्रातिसत्वनं, क्रियाविशेषणमेतत्। प्रतिकूलैः सत्वैरपि सहैता अश्वा आप्लवन्ते इत्यर्थः। अथवा सत्वानो विमतो वाता उच्यन्ते प्रातिसत्वनं प्रतिवातमित्यर्थः। नाथाम्वां वाडवानामेका हरिक्निका हरितवर्णतामाह। हरिक्निके किमिच्छसि इत्येवं रूपः प्रलापः॥

---

## किमयमिदमाहेति[1] ॥९७॥

इति व्रीडा = लज्जा (२६)। आहनस्यानामृचां प्रतिगरः। आहनस्याः सभ्येतरवादिन्य ऋच उच्यन्ते। कुत एतत्? "अयं जीवो वै पुरुषो मेध्यो यथा·····मस्या जायते[2]" इति श्रुतेः। प्रतिप्रस्थाता प्रतिगृह्णाति किमयमिदमाह इति किमयं ब्राह्मणाच्छंसी सभ्येतररूपं वचनमाहेति व्रीडा मे जायत इत्यर्थः॥

---

कस्यं नूनं कंतमस्यामृतानां मनामहे चारुं देवस्य नामं।
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च[2] ॥९८॥

---

इति उपधावनम् (२७) उपधावनमाश्रय[ण]मित्यर्थः। अस्याः प्रथमं तावदाख्यानं प्रस्तूयते—"अजीगर्तो नाम ब्रह्मर्षिः सुवचसस्य सूनुः पुत्रदारसहितो दुर्भिक्षे क्षुधया पीड्यमानो निरतिशयतपो महाभाग्ययुक्तः प्राधान्यात् प्रजापतिमेव देवानां मध्ये प्रथमं प्रार्थयते कस्य नूनम्"[3]

---

(१) अनुपलब्धमूलमिदम्॥ (२) ऋ० १।२४।१॥

(३) एतेन सुवचसपुत्रस्याजीगर्तस्यार्षमिदमिति स्पष्टम्। ऐतरेयब्राह्मणे [७४] तु—"स [आजिगर्तिः शुनःशेपः] प्रजापतिमेवप्रथममुपससार कस्य नूनं कतमस्यामृतानामित्येत-

इति । [ कस्य ] "को वै नाम प्रजापतिः" इति क इति प्रजापतिरुच्यते, प्रजापतेः नूनम् नूनशब्दो निश्चयार्थः, निश्चयेन कतमस्य कं सुखं तदतिशयेन कर्तव्यं प्राणिनां येन तस्य अमृतानाम् अमरधर्माणां देवानां पितुरितिशेषः। मनामहे अर्चयतिकर्माऽयम्[१], अर्चयामः चारु शोभनं देवस्य दानादिगुणस्य नाम नमनेन प्रह्वत्वेन स्तवनं लक्ष्यते। निश्चयेन प्रजापतिमर्चयामः स्तुम इत्यर्थः अथवा मनामहे याच्ञाकर्माऽयं[२] याचामहे। किं प्रकरणसामर्थ्यादायुः। प्रजापतिमायुर्याचामहे इत्यर्थः। [कः] प्रजापतिरस्माभिराराधितो नः अस्मान् मह्यै पृथिव्यै अदितये अक्षीणायै पुनर्दात् ददातु पृथिव्यां स्थापयतु इत्यर्थः। ततश्च पितरं च दृशेयं मातरं च दृशेयमित्यनुषङ्गः। मातृपितृगतः[३] स्नेहो मां बाधत इत्यभिप्रायः॥

---

माता चं ते पिता च तेऽग्रं वृक्षस्यं रोहतः।
प्रतिलामीतिं ते पिता गभे मुष्टिमंतंसयत्[४] ॥९९॥

इति आक्रोशः (२८)। अश्वमेधे संज्ञप्तस्याश्वस्य समीपशायिनीं महिषीं होता क्रोशति। कुत एतत्? अश्वमहिष्योर्मिथुनत्वदर्शनात्। माता च ते पिता च ते तव संगत्य अग्रं उपरि वृक्षस्य वृक्षजस्य खट्वाफलकस्य [रोहतः] क्रीडतः। कथम्? प्रतिलामीति ला दाने प्रददानि सुरतमिति ते पिता तव मातुः गभे गभशब्दो हृदयवचनः हृदये मुष्टिमतंसयत् तसिः प्रक्षेपार्थः प्राक्षिपत्। अथवा आद्यन्तविपर्ययः भगे मुष्टिम् मुष्टिशब्देन मोहनहेतुः शेपोऽभिधीयते तथा मुष्टिमोहनाद् वा इति निरुक्तम्[५]। मुष्टिं प्रजननम्

---

यर्चा" इत्युक्तम् तथा सति शुनःशेपस्यार्षमिदम्। तथैव च कात्यायनेनाप्यनुक्रान्तम्। द्र० सर्वा० १।२४॥

अत्र विशेषस्तु वैदिकविमर्शनाम्नि ग्रन्थे 'क्या ऋषि वेद-मन्त्रों के रचयिता थे?' इति प्राकृतभाषानिबद्धेऽस्मदीये लेखे द्रष्टव्यः। पृ० ४४४-४५१॥

(१) निघण्टौ [३।१४] न पठ्यते। (२) निघ० ३।१९॥
(३) अत्र पूर्वपदे आनङोऽभावः॥ (४) यजुः० २३।२४॥ (५) निरु० ६।१॥

अतंसयत् प्रक्षिप्तवान्, न केवलं युवामेव मिथुनभावं प्रपद्येथे[1] इत्यर्थः ॥

---

वितंतौ किरणौ द्वौ तावा पिनष्टि पूरुषः ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे[2] ॥ १०० ॥

इति प्रवह्लिका (२९)। अन्तर्हितार्था प्रवह्लिका उच्यन्ते। दुन्दुभिमाहननाभ्यामाघ्नन्त[म्] मैथुनकर्मणि वर्तमानमिवोत्प्रेक्षन्ते। विततौ विस्तीर्णौ किरणौ प्रक्षेपणसाधनभूतौ द्वौ तौ प्रसिद्धौ योनेरभितो मांसलौ प्रदेशौ आपिनष्टि आभिमुख्येन निर्घर्षति पुरुषः स्वेदक्लिन्नगात्रः। एवमुत्प्रेक्षायामपरमाह न वै वैशब्दोऽवधारणार्थः। हे कुमारि लुप्तोपममेतत् मन्दप्रज्ञत्वात् कुमारिसदृशौ तत् तथा यथा कुमारीसदृशं मन्यसे मैथुनम् मैथुनकर्मणि वर्तमानमिति किं पुनस्तं दुन्दुभिमाहननाभ्यां हरन्तीत्यर्थः।

---

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः[3] ॥१०१॥

इति परिवादः (३०)। परि (?, पर)गतदोषाविष्करणपूर्वो वादः परिवाद उच्यते। विश्वामित्रो यज्ञार्थमिन्द्रं याचते। किं ते तव कृण्वन्ति किं कुर्वन्ति कीकटेषु गावः, कीकटाः किंकृताः[4] किमर्थमेत उत्पादिताः, सन्त

---

(१) अयं मन्त्रः शतपथे त्वेवं व्याख्यायते—"माता च ते पिता च त इति। इयं वै माताऽसौ पिताभ्यामेवैनमग्रं स्वर्गलोकं गमयत्यग्रं वृक्षस्य रोहत इति श्रीर्वै राष्ट्रस्याग्रं श्रियमेवैनं राष्ट्रस्याग्रं गमयति प्रतिलामीति ते पिता गभे मुष्टिमतंसयदिति विड् वै गभो राष्ट्रं मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद् राष्ट्री विशं घातुकः" ॥ इति। शत० १३।२।९।७॥

अस्य एतादृशां चान्येषां मन्त्राणां शतपथानुगतः सम्यगर्थः स्वामिदयानन्दसरस्वतीप्रणीतायामृग्वेदादिभाष्यभूमिकायां द्रष्टव्यः।

(२) अथ० २०।१३३।१॥ (३) ऋ० ३।५३।१४॥ (४) निरु० ६।३२॥

इति। किमः करोतेश्च वर्णव्यापत्त्यादिना कीकटाः। अथवा क्रियाभिरिति दीना कीकटा उच्यन्ते क्रियाशब्दादुत्तरपदमिति भेदः। तेषां गावः। कुतः ? यतः नाशिरं दुह्रे आशिरमिति कारणस्य कार्यव्यपदेशः। तत्कारणभूतं पयो न दुहन्तीत्यर्थः। किं च न तपन्ति घर्मम् तपिरत्रान्तर्णीतण्यर्थः। न तापयन्ति नोऽवलयन्ति धर्मं, प्रवर्ग्ये विनियोगं [ न ] गच्छन्तीत्यर्थः। यथा तैस्ते[षां] प्रयोजनं नास्त्येवं प्रमगन्दस्य वेदः आ नो भर अस्माकमाहर। प्रमगन्दस्य मगन्दः कुसीदी मां समेष्यति वृद्धो धनराशिरिति बुद्ध्या यो ददाति स वार्धुषिको मगन्द उच्यते। तस्यापत्यं प्रमगन्दः, प्र अपत्यार्थे प्रस्कण्व[1] इति यथा, प्रमगन्दको वा प्रकर्षेणाश्मानमेव यो मादयति नातिथ्यादीन् नास्तिकः स प्रमगन्दः, तस्य वेदो धनम्। किं च नैचाशाखम् नीचा निर्गतास्त्यक्ता ऋचादयः शाखा उच्यन्ते नीचाशाखाः, तेषां स्वभूतं नैचाशाखम्, तदपि हे मघवन् रन्धय रन्धतिर्वशगमने नः अस्माकम्, तदप्यस्मद्वशं गमय। तथा ह्यवस्थितं धर्मवचनम्—"योऽसाधुभ्योऽर्थमादाय"[2] इत्यादि। अतो यष्टॄणामस्माकमयष्टॄणां धनमाहर इत्याशास्महे॥

---

यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नीत॑ ए॒व।
तमा ह॑रामि॒ निर्ऋ॑तेरु॒पस्था॒दस्पा॑र्षमेनं श॒तशा॑रदाय[3] ॥१०२॥

इति परित्राणम् ( ३१ )। परित्राणं परिपालनम्। यक्ष्मनाशनर्षिर्यक्ष्मगृहीतमाह। यदि क्षितायुः यदि क्षीणायुः यदि वा परेतः परागतः कथमपि। यदि वा मृत्योः देवताया अन्तिकम् समीपं नीत एव एव शब्दोऽप्यर्थे नीतोऽपि तमाहरामि निर्ऋतेरुपस्थात् प्रलयाधिदेवताया अङ्कप्रदेशादप्याहृ-

(१) द्र० निरु० ३।१७॥ (२) मनु० ११।१९॥
(३) ऋ० १०।१६१।२॥

तस्य अस्पार्षम् रक्षामि [ एनम् ] शतशारदाय शतसंवत्सराय जीवसे शतसंवत्सरं जीवितुमित्यर्थः ॥

## ॥ इति वाररुचे निरुक्तसमुच्चये चतुर्थः कल्पः ॥

कल्पैश्चतुर्भिर्व्याख्यातं सारभूतमृचां शतम्[१] ।
सहस्रं पञ्चशतं श्लोकेनानुष्टुभेन कृतम् ॥
सहस्रं पञ्चशतं संख्या ग्रन्थस्य प्रकीर्तिता ।
विस्तरभीत्या संक्षिप्तं तात्पर्यार्थावबुद्धये ॥
एवं निरुक्तमालोक्य मन्त्राणां विवृतं शतम् ।
उक्तानुक्तदुरुक्तानि चिन्तयन्त्विह पण्डिताः ॥

भगवते यास्काय नमः ॥

ओं नमो नारायणाय नमः शिवाय ॥[२]



(१) अस्मिन् ग्रन्थे ( १०२ ) द्व्युत्तरशतं मन्त्रा व्याख्याताः । अत्र शतमिति वचनं सामान्यपरम् ।

(२) इतोऽग्रे हस्तलेखे बृहद्देवता ग्रन्थस्थाः षट्त्रिंशद्विधमन्त्रनिदर्शकाः षड्विंशति ( १।३५।६० ) श्लोकाः समुल्लिखिताः ।

# प्रथमं परिशिष्टम्

## अवशिष्टाष्टिप्पण्यः संशोधनं च

| पृष्ठ | पंक्ति | टिप्पण्यः संशोधनं च |
|---|---|---|
| १ | १९ | 'वायुश्च सवर्गः' इत्यस्य स्थाने 'वायुश्च सर्वगः' इति पठनीयम् । |
| ३ | ६ | '……वनस्य (?)' इत्यस्य स्थाने 'भुवनस्य' इत्येवं शोधनीयम् । |
| ४ | टि० ३ | 'पाठः स्यात्' इतोऽग्रे "यद्वा 'मर्यादार्थम् आह" इति शुद्धः पाठो द्रष्टव्यः" इत्यंशो वर्धनीयः । |
| ५ | टि० ४ | 'शांख्यायने' इत्यस्थ स्थाने 'शांखायने' इति पठनीयम् । |
| ६ | टि० १ | टिप्पण्यन्ते परिवर्धनीयम्—"ग्रन्थकाररोशीतितममन्त्रस्य व्याख्याने 'शाकपूणिना नैरुक्ताचार्येण' इत्येवमपि पठति ।" |
| ८ | १२ | 'बहुवचनमेतद्रूपम्' इत्यस्य स्थाने 'बहुवचन एतद्रूपम्' इत्येवं शोधनीयम् । |
| १६ | ८ | 'दामाभ्यां नुः' इत्यस्य स्थाने 'दामाभ्यां नुः' इति शोधनीयम् । |
| १७ | १४ | 'निर्मूलम्' इत्यस्याग्रे '[कुरु]' इत्येवं पूरणीयम् । |
| २० | टि० ५ | 'पठितः' इतोऽग्रे 'शाकपूणिना पठितं स्याद् यज्ञनामसु' इति परिवर्धनीयम् । |
| २२ | १२ | पातु इत्यनुषङ्गः। अत्रेयं टिप्पणी योजनीया—अध्याहारानुषङ्गयोरयं विशेषः—'लौकिकोऽध्याहारः, अनुषङ्गस्तु मन्त्रावयव एव' (उव्वट यजुर्भाष्य १।१)। अर्थात् यत्र मन्त्रार्थो मन्त्रबहिर्भूतेन लौकिकेन पदेन पूर्यते स अध्याहार उच्यते। यत्र तु मन्त्रगतेन पूर्वपठितेन पदेनैव अर्थः पूर्यते सोऽनुषङ्ग उच्यते। |
| २३ | टि० १, २ | अत्र दृष्टिदोषात् प्रथमा टिप्पणी द्वितीयस्थाने द्वितीया च प्रथमस्थाने मुद्रिता। ते यथायथं बोद्धव्ये। |

**विशेषः**—अत्र पङ्क्तिगणनायां ग्रन्थस्य पङ्क्तय एव परिगणिताः, न तूपरितना पुस्तकनामादिनिदर्शिका मध्ये मध्ये च प्रयुज्यमाना—चिह्नवती पङ्क्तिः।

२३ टि० ३ 'निघ० ५।१' इत्यस्य स्थाने 'निघ० २।१' इत्येवं शोधनीयम् ।

२६ १३ 'मरुच्छब्देन'''उच्यन्ते' पाठेन सह तुलना कार्या—'मरुद्देवः, तद्विशेषः—इन्द्रः आदित्यः रविः अग्निः वह्निः । वामनीयं लिङ्गानुशासनं, पृष्ठ १६ पं० ४, अस्मत्संस्करणम् ।

४७ टि० ६, ७ अत्र षष्ठीसप्तम्योष्टिप्पण्योर्वैपरीत्येन मुद्रणं प्रमादात् संजातम् । तेन षष्ठ्याः स्थाने सप्तम्याः पाठः, सप्तम्याः स्थाने च षष्ठ्याः पाठो ज्ञेयः ।




५२ ६ ॥५१॥ इत्यस्य स्थाने ॥५२॥ द्रष्टव्यम् ।

७१ टि० टिप्पण्या अन्त्याभ्यश्चतसृभ्यः पंक्तिभ्यः प्रागयमंशो वर्धनीयः—आयुर्वैदिकायां चरकसंहितायाम् अतिसाररोगोत्पत्तिप्रकरणे (चि० स्थान १९।४) स्पष्टमुच्यते—

'आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुः, नालम्भाय प्रक्रियन्ते स्म । ततो दक्षयज्ञप्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुनृगशर्यात्यादीनां च क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमापुः । ततश्च प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण यजता पशूनामभावाद् गवालम्भः प्रवर्तितः''''''।'

एतेन आदिकाले कृतयुगे यज्ञेषु पशवो न संज्ञप्यन्ते स्म इति विस्पष्टं भवति । यज्ञेषु पशूनां संज्ञपनमप्यज्ञानाद् भ्रान्त्या वा प्रवृत्तमित्यपि 'पशूनामेवाभ्यनुज्ञानात्' इति पदैः स्पष्टम् ।

७३ टि० १ प्रथमटिप्पण्या अन्ते परिवर्धनीयम्—उव्वटः स्वीययजुर्भाष्यस्योपोद्घाते त्रयोदशविधा मन्त्रा इत्युक्तवान्, त्रयोदशविधत्वं च तत्रैव सोदाहरणं निदर्शितमपि ।

८५ ११ वृकाः विकर्तनशीलाः । अत्र 'श्वापि वृक उच्यते विकर्तनात्' इति निरुक्तमनुसन्धेयम् ।

८५ टि० ४ आदित्योऽपि वृक उच्यते ( निरुक्त ५।२१ ) ।

( अवशिष्टाः टिप्पण्यः १०१ पृष्ठे द्रष्टव्याः )

# द्वितीयं परिशिष्टम्

## निरुक्त-समुच्चये प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि विशिष्टानि च कानिचित् पदानि



* अत्र कानिचिदेव पदानि सविभक्तिकानि विशेषाभिप्रायद्योतनाय पठितानि, अन्यानि तु प्रातिपदिकमात्राणि।

† अत्र निर्दिश्यमाना संख्या अस्य संस्करणस्य पृष्ठसंख्या ज्ञेया।



—•—

## ( ९९ पृष्ठस्य अवशिष्टाष्टिप्पण्यः )

९१    ४ दुर्जनस्य कटुवचनं शमनकरम्, न मृदुवचनम्। अनेन तुलना कार्या—अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्य च।

मधुरैः कोपमायाति कटुकेनैव शाम्यति ॥ इति।

प्रकृतिसादृश्यम् = स्वभावसाम्यम्। श्लेष्मणः = कफस्य। मधुरेण = श्लेष्मणः पक्षे मधुरैर्द्रव्यैः, दुर्जनपक्षे सुवचनैः। कटुकेन = श्लेष्मणः पक्षे कटुद्रव्येण, दुर्जनपक्षे कटुवचनेन।

९१   ११–१४ अयं मन्त्रपाठो न व्याख्यानुसारी। व्याख्यानुसारी मन्त्रपाठो मृग्यः।

९४   १० मातृपितृगतः। अयम् आनङ्रहितः प्राचीनः प्रयोगः। द्रष्टव्या-अत्र 'मातृपितृसंयोगाच्च' ( निरुक्त १४।६ ) 'मातृपितृभ्याम्' ( महा० शान्ति १२९।९ ) मातृपितृवत् ( महा० शान्ति १३८।८४ ) इत्यादयः प्राचीनाः प्रयोगाः।

# तृतीयं परिशिष्टम्

## निरुक्तसमुच्चये व्याख्यातानां मन्त्राणां वर्णानुक्रमेण सूचीपत्रम्



‡ मन्त्रप्रतीकानन्तरं निर्दिष्टा संख्या अस्य संस्करणस्य पृष्ठसंख्या ज्ञेया ।

# भारतीय प्राच्यविद्या प्रतिष्ठान विक्रय विभाग

## प्रतिष्ठान द्वारा प्रकाशित तथा प्रसारित वाङ्मय

| | | |
|---|---|---|
| १. संस्कृत व्याकरण-शास्त्र का इतिहास (भाग १) | ( यु० मी० ) | १५-०० |
| २. संस्कृत व्याकरण-शास्त्र का इतिहास ( भाग २ ) | " | १२-०० |
| ३. वैदिक-स्वर-मीमांसा | " | ४-०० |
| ४. वैदिक-छन्दोमीमांसा | " | ४-५० |
| ५. ऋषि दयानन्द के ग्रन्थों का इतिहास | " | ६-०० |
| ६. काशकृत्स्न व्याकरण और उसके उपलब्ध सूत्र | " | १-०० |
| ७. आचार्य पाणिनि के समय विद्यमान संस्कृत वाङ्मय | " | १-०० |
| ८. ऋग्वेद की ऋक्संख्या ( हिन्दी ) | " | ०-३० |
| ९. मन्त्रब्राह्मणयोर्वेदनामधेयम्—इत्यत्र कश्चिदभिनवो विचारः | " | ०-२५ |
| १०. दुष्कृताय चरकाचार्यम्—मन्त्र पर विचार | " | ०-२५ |
| ११. सामस्वराङ्कन-प्रकार | " | ०-२५ |
| १२. संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि | ( डा० कपिलदेव एम० ए० ) | ८-०० |
| १३. संस्कृत सुभाषित सौरभ | ( पं० मुनिदेव वैद्य ) | २-५० |
| १४. वैदिक वाङ्मय में प्रयुक्त विविध स्वराङ्कन प्रकार | (यु० मी०) | १-५० |
| १५. वेदविद्यानिदर्शन | ( श्री पं० भगवद्दत्तजी ) | १२-५० |
| १६. भारतवर्ष का बृहद् इतिहास ( भाग १,२ ) | " " | ३८-०० |
| १७. भाषा का इतिहास | " " | ८-०० |
| १८. यजुर्वेद भाष्य विवरण ( भाग १ ) | (श्री पं० ब्रह्मदत्तजी जिज्ञासु) | १६-०० |
| १९. दशपादी-उणादि-वृत्ति | ( सं० यु० मी० ) | ३-२५ |
| २०. क्षीरतरङ्गिणी ( प्राचीन धातुवृत्ति ) | " | १२-०० |
| २१. वामनीय लिङ्गानुशासन | " | २-०० |
| २२. भागवृत्ति-संकलनम् ( अष्टाध्यायी की प्राचीन वृत्ति ) | | ४-०० |
| २३. निरुक्त-भाष्य | ( पं० भगवद्दतजी ) | १५-०० |
| २४. अष्टाध्यायी-भाष्य ( भाग १ ) | ( पं० ब्रह्मदत्तजी जिज्ञासु ) | १२-०० |

## भारतीय प्राच्यविद्या प्रतिष्ठान

३१/१४४ अलवर गेट
अजमेर

४९९३ रेगरपुरा गली ४०
करोल बाग, नई दिल्ली—५

